about the opinions of the Tārkikas and the Mīmāṁsakas, and refutes their views on the nature of *śabda* and establishes his own view. According to the Muni *śabda* is a power of light. After the discussion on *śabda* the Muni deals with *artha* or sense.

In the second part of ***dharmānuśāsanam*** the Muni discusses about the dharma and its *lakṣaṇa* and then continues to discuss about the authoritativeness of the Vedas. First, the Muni speaks about the opinion of the Mīmāṁsakas on the subject and then deals extensively with the many aspects related to the topic under discussion by refuting the views of the Mīmāṁsakas and establishing his own. There are four chapters and three hundred twenty-eight *sūtras* in this note.

The first chapter of the third part of ***dharmānuśāsanam*** deals with the nature of the dharma and *puṇya*. The second chapter discusses about the *paramapuruṣārtha* or the ultimate goal of the man. Here the Muni first gives the views of other Rishis and then tells us at the end that it is *amṛtatvam* or immortality that is the ultimate goal to be achieved. The third deals with the relationship between dharma and *amṛtatvam*. In the fourth chapter the Muni gives stress on the real knowledge of everything. He strongly follows the words of the Gita and says that anything that is done without knowing the *tattva* of that has less effect or no effect.

The fourth part of the ***dharmānuśāsanam*** begins with the *dharmalakṣaṇa* or the nature and definition of dharma. Here the Muni defines dharma in a very different way while saying that dharma is "celestial refinement brought into the body, mind and life". kāya-prāṇa-manasām alaukika saṁskāraḥ dharmaḥ. (Elsewhere the Muni explains the word *saṁskāra* as *ātmajñānam* or self-knowledge or self-awareness.) After this the Muni explains in detail the dharma of the body, dharma of the life and dharma of the mind. The wave of light spread through all the *nāḍis* is the dharma of the body. This is what is called *kuṇḍalinī* by the

Tantrikas. Unimaginable energy is the dharma of life or the vital level of our consciousness. A fixed or decisive memory is the dharma of the mind. After this the discussion proceeds on how to have the knowledge of these dharmas at different levels. But the text is incomplete.

All that is discussed in the fourth part of ***dharmānuśāsanam*** is again repeated in the fifth part in a different language. Here the Muni says that it is *brahmavarcasam* that is the dharma of the body. In the fourth part the word *brahmavarcasyam* is explained as a golden light flowing throughout the body. The endurance of all dualities is the dharma of the vital. A decisive memory is the dharma of the mind. Here the explanation of how to achieve the knowledge of the dharma of the body is given in a detailed manner. But about the other two dharmas there is no explanation. With this ends the first chapter of this part. In the second chapter the Muni discusses about the *paramapuruṣārtha* or the ultimate goal to be achieved. But the text is incomplete.

In the sixth and seventh parts of ***dharmānuśāsanam*** the Muni takes the views of many others on dharma and shows the shortcomings of those definitions. Both the texts are incomplete.

The eighth part is also an incomplete text having twenty - seven sutras where the Muni has taken up the problems related to the system of *cāturvarṇyam* or the fourfold division of the mankind.

The ninth or the last part of the ***dharmānuśāsanam*** exclusively deals with *cāturvarṇyam*. Here the Muni discusses a lot about the factors that decide the *varṇa* of a *vyakti*. According to the Muni it is neither the *janma* or birth, *vṛtti* or occupation, *guṇa* or virtue, nor the *karma* or deed that decides the *varṇa* of a vyakti. The Muni gives sufficient evidences to substantiate this statement. In the last five *sūtras* he provides wonderful definitions of

all the four *varṇas* as well as *niṣādas*. According to him when the power of integral knowledge shines in the self then the *vyakti* attains to Brahminhood. And if it is the power of integral strength then he attains to Kshātrahood. To get the knowledge and strength when one enters into tapas then he is known as Viṭ or Vaiśhya. When the *vaykti* helplessly surrenders himself at the feet of the Divine he is called Shudra. The one who considers this *saṁsāra* or the material world as the supreme and gets completely engrossed there is known as *niṣāda*.

There are two notes available under the title of ***devatāmīmāṁsā***. Here we have put them as ***devatāmīmāṁsā*** one and two. The part one begins with the discussion on the division of the entire creation into two – one is the world here and the other is the residual above or the supreme abode , the *paramaṇḍala*. Then the discussion proceeds on many other aspects related to the principles of existence. At one point of discussion the Muni says that it is the Consciousness which is the integral divinity residing in all. She, the *cit*, is the Supreme Divinity. All other gods and beings are Her manifestations. She is called Aditi, the indivisible one. The nature of this integral divinity is dealt with in detail in the following sutras of this part.

The second part of the ***devatāmīmāṁsā*** the Muni deals with the *vedapramāṇa* where he discusses about the word, sense, and their relationship, the Mantra, the Rishi, the *apauruṣeyatva* of the Vedas etc. There are fifty-eight *sūtras* in this incomplete text.

In ***vasiṣṭhadarśanam*** the Muni deals with the three kinds of *pramāṇas* – *pratyakṣa* or direct perception, *anumāna* or inference, and *āptavākya* or the words of the Rishis. The text is incomplete.

***Sarvārthadarśanam*** is an incomplete text having seventy-seven *sūtras*. Here also the Muni discusses about the three

*pramāṇas*. The text deals more with *pratyakṣa* or the direct perception.

***Ādiśāstrārthasūtram*** has seventeen sutras dealing with the philosophy of the Vedic Rishis in general and Visvamitra and Madhuchandas in particular.

***Vāsiṣṭhakāmasūtram*** in four chapters has ninety *sūtras*. This text provides a brilliant exposition of true sexuality. In the first chapter the Muni deals with the fourfold division of the women and makes a clear note on the acceptance and nonacceptance of these women. According to the Muni a man should entertain the woman as per the scriptural prescriptions on this matter. The second and third chapters deal with many other aspects of sexuality. The fourth chapter provides a description of different types of purushas or men. In this text while giving his own opinion on the subject the Muni also accepts the opinion of other ancient *ācāryas* like Shvetaketu and Babhravya.

***Mahāvārtikam*** deals the *apauruṣeyatva* and authenticity of the Vedas. There are ninety-four *sutras* and the text is incomplete.

Many of these *sūtra* writings of the Muni are incomplete, yet they reveal the hidden knowledge of our rich tradition and help us in understanding the worlds within ourselves and the worlds above, and their relationship. The contribution of the Muni to the *sūtra* writings of the modern Sanskrit age is immense and will be remembered for ever.

# विश्वमीमांसा (१)

## प्रथममाह्निकम्

### उपोद्घातः

अथातो विश्वमीमांसा ॥ १ ॥

स्पष्टार्थैरक्लिष्टैः सूत्रैः ॥ २ ॥

अत्र विभक्तिवचनविपरिणामेन नानुवृत्तयः ॥ ३ ॥

आह्निकैर्ग्रन्थस्य विभागः ॥ ४ ॥

एकेनाह्ना यत्क्रियते तदाह्निकम् ॥ ५ ॥

केचित्प्राहुरिति मध्याः पूर्वपक्षाः ॥ ६ ॥

केचिदिवेतरेऽन्येऽपरे परे ॥ ७ ॥

स्यात्स्यातां स्युरित्यापत्तिप्रदर्शनेषु ॥ ८ ॥

इत्युक्तं भवतीति पूर्वपक्षखण्डनोपसंहारे ॥ ९॥

खण्डितस्य च प्रतिपाद्यशुद्धये प्रकारान्तरेण पुनः खण्डनं बहुषु स्थलेषु ॥ १०॥

तत्रोक्तमिति प्रागुक्तपरिहारस्मारणे ॥ ११॥

आत्मनः परस्य वा नामतो ग्रहणं सिद्धान्ते यस्य सः ॥ १२॥

वासिष्ठ इति गोत्रकृतेन नाम्नाऽऽत्मनो ग्रहणम् ॥ १३॥

परनामग्रहणेष्वितेः पूर्वं तस्य वाक्यम् ॥ १४॥

तन्मतानुवादिग्रन्थवाक्यं वा ॥ १५॥

सूत्रेष्वनन्त्यं परनामखण्डनेषु सिद्धान्तेषु च तद्वाक्य उदाहर्तव्ये ॥ १६॥

पूर्वपक्षेषु च ॥ १७॥

इति चेदन्तं सूत्रमाक्षेपस्त्रिषु ॥ १८॥

नन्विति चेन्मध्यानि सूत्राणि च ॥ १९॥

इति सत्यमिति सिद्धान्तोपसंहारे ॥ २०॥

पश्यतीत्यार्षदर्शनत्वस्योक्तौ ॥ २१॥

उपदिशतीत्यौपनिषदादेशत्वस्य ॥ २२॥

विदधातीति ब्राह्मणस्थविधिवाक्यत्वस्य ॥ २३॥

मन्यत इति परीक्षकमतित्वस्य ॥ २४॥

वेति सिद्धान्तविकल्पे ॥ २५॥

भव्यविचारेष्वेव सिद्धान्तविकल्पाः ॥ २६॥

तेषु यथापूर्वं ज्यायस्त्वम् ॥ २७॥

शुभफलतारतम्यादिदं तारतम्यम् ॥ २८॥

नामग्रहणपूर्वकं मतान्तरोपन्यासाश्च सिद्धान्तविकल्पेषु ॥ २९॥

तत्र तुल्यं बलं विकल्पानाम् ॥ ३०॥

1

# विश्वमीमांसा (२)

## प्रथमोऽध्यायः

### पीठिका

अथातो विश्वमीमांसा ॥ १॥

स्पष्टार्थैः सूत्रैः ॥ २॥

अमुकाः प्राहुरिति मध्याः पूर्वेपक्षाः ॥ ३॥

अमुकः प्राहेति मध्याश्च ॥ ४॥

एवमपरः प्राहेति मध्याः ॥ ५॥

यत्र वैशेषिकाणां नैयायिकानां च तुल्यं मतं तत्र तार्किका इति सामान्यतो ग्रहणम् ॥ ६॥

निरोधकाः सर्वथा स्थिताचारसमर्थकाः ॥ ७॥

प्रागतिकाः सर्वत्र संस्करणवादिनः ॥ ८॥

सूत्रान्ते स्वस्य परस्य वा नामतो ग्रहणं सिद्धान्ते यस्य सः ॥ ९॥

वासिष्ठ इति गोत्रकृतेन नाम्ना स्वस्य ग्रहणम् ॥ १०॥

परनामग्रहणेष्विति चेत्ततः पूर्वं तस्य वाक्यम् ॥ ११॥

तन्ममानुवादिग्रन्थवाक्यं वा ॥ १२॥

न चेत्तदभिप्रायस्य स्ववचसा निर्देश इति बोध्यम् ॥ १३॥

सिद्धान्तविकल्पेषु य आत्मनः स निजतन्त्रसिद्धान्तः ॥ १४॥

इतरोऽपि नासम्मतः ॥ १५॥

भूतं भव्यं व्यावहारिकं चेति विचार्यं त्रेधा ॥ १६॥

सिद्धं वस्तु भूतम् ॥ १७॥

कर्मणा वृत्तेनोपासनेन वा साध्यमदृष्टं भव्यम् ॥ १८॥

उभयातिरिक्तं व्यवहारसौष्ठवप्रयोजनं बुद्ध्यपेक्षं व्यावहारिकम् ॥ १९॥

भूतेतरविचारेष्वेव सिद्धान्तविकल्पाः ॥ २०॥

सूत्रेष्वनन्त्यं परनामसिद्धान्तिना पूर्वपक्षिणा वा तद्वाक्य उदाहर्तव्ये ॥ २१॥

पश्यतीत्यार्षदर्शनस्योदाहरणे ॥ २२॥

उपदिशतीत्यौपनिषदादेशस्य ॥ २३॥

इति चेदन्ते सूत्रे पूर्वो भागः परस्याक्षेपः पूर्वपक्ष सिद्धान्तयोः ॥ २४॥

समाधानाभासो वा खण्डने ॥ २५॥

नन्विति चेन्मध्यानि सूत्राणि चैवम् ॥ २६॥

मतहानिरिति पूर्वपक्षितन्त्रसिद्धान्तविरोधस्यापत्तौ ॥ २७॥

अप्रसिद्धिरित्यनुभवविरोधस्य ॥ २८॥

उक्तो दोष इति तस्य तत्तुल्यकक्ष्यस्य वा वादस्य प्रागुक्तापत्तिस्मारणे ॥ २०॥

तत्रोक्तमिति प्रागुक्तपरिहारस्मारणे ॥ ३०॥

अन्त्यपदस्य द्विः प्रयोगोऽध्यायसमाप्तौ ॥ ३१॥

यत्र न पूर्वपक्षवादस्तत्र नामग्रहणं विनैव स्वसिद्धान्तकीर्तनं स्वसिद्धान्तकीर्तनम् ॥ ३२॥

# विश्वमीमांसा (३)

## प्रथमोऽध्यायः

### वेदप्रामाण्यचर्चा

वेदाः प्रमाणं कर्त्रनुपलब्धेरपौरुषेयत्वादित्येके ॥ १॥

प्रामाण्यस्य कारणगुणार्थित्वान्नेति चेत् ॥ २॥

ज्ञानस्य स्वतः प्रामाण्यमन्यथाऽनवस्था प्रसङ्गात् ॥ ३॥

कारणदोषावधारणं तदपवादः ॥ ४॥

कारणाभावे तद्दोषासम्भवादनपवादं प्रामाण्यम् ॥ ५॥

शब्दोत्पत्तेर्नेति चेत् ॥ ६॥

अभिव्यक्तिरविद्ययोत्पत्तिरुच्यते ॥ ७॥

वर्णसङ्घातानामर्थेषु सङ्केतितत्वात्सर्वे शब्दाः पौरुषेया इति चेत् ॥ ८॥

न सहजत्वाच्छब्दार्थसम्बन्धस्य ॥ ९॥

न तस्य मतेरनन्यत्वात् ॥१०॥

लक्ष्ये तत्र स्पष्टमतिरिक्तत्वप्रतीतेः ॥११॥

व्यङ्ग्ये च ॥१२॥

पदान्यपि पौरुषेयाणि विभक्त्यर्थानां बुद्ध्यपेक्षत्वात् ॥१३॥

धातुप्रातिपदिकं च पौरुषेयं वर्णसङ्घातानामर्थेषु सङ्केतितत्वात् ॥१४॥

शब्दार्थयोः सम्बन्धः सहज इति चेत् ॥१५॥

अगृहीतसङ्केतस्यापि शब्दतोऽर्थस्फूर्तिः स्यात्तत्रार्थबोधकत्वस्य सहजत्वे॥१६॥

लोके भाषाबाहुल्यं न स्यात् ॥१७॥

भाषापरिणामस्यानुपपत्तिः ॥१८॥

कालभेदेन पदार्थभेदस्य च ॥१९॥

एवं वेदाः पौरुषेयाः पुरुषबुद्धिविलसितत्वात् ॥२०॥

मधुच्छन्दःप्रभृतीनां कर्तॄणामुपलब्धेः ॥२१॥

प्रवचनादाख्या इति चेत् ॥२२॥

परिहार एवायं हेत्वन्तरे चेन्नित्यत्वं सिध्येत् ॥ २३॥

नित्यत्वाख्या गौणत्वकर्त्रनुपलब्धीनामितरेतराश्रयत्वभ्रमणाच्चक्रकम् ॥ २४॥

यस्य वाक्यं स ऋषिरित्युच्यते ॥ २५॥

न यस्य विशिष्टमध्यापनमनन्यसाधारणमध्ययनं वा यद्वः प्रवचनम् ॥ २६॥

अपि चर्षयो मन्त्रद्रष्टार उच्यन्ते न मन्त्रपाठकाः ॥ २७॥

मन्त्राणां दर्शनायोग्यत्वाद्गौणो व्यवहार इति चेत् ॥ २८॥

अविपर्यस्तबुद्धार्थापेक्षया ॥ २९॥

शब्दापेक्षया मन्त्रकृतः ॥ ३०॥

नमो मन्त्रकृद्भ्य इति ब्राह्मणम् ॥ ३१॥

सुकर्मपापमन्त्रपुण्येषु कृञ इति पाणिनिः ॥ ३२॥

वाचा विरूपनित्ययेति वचनप्रामाण्यान्नित्यत्वमिति चेत् ॥ ३३॥

नित्यत्वप्रमाणत्वयोरितरेतराश्रयः ॥ ३४॥

सततयेत्यर्थश्च कर्तुं शक्यतेऽग्निस्तुतिप्रेरणस्य प्रकृतत्वात् ॥ ३५॥

नित्याग्निहोत्रादाविवार्थसङ्गतिः ॥ ३६॥

ऋषिणा विरूपेत्यात्मा सम्बोध्यत इति स्पष्टं मन्त्रस्यार्षत्वम् ॥ ३७॥

विरूपनित्ययेत्येकं पदमिति चेत् ॥ ३८॥

न पृथक् पदपाठात् ॥ ३९॥

निगमेष्वन्यत्राप्यात्मसम्बोधनानि दृश्यन्ते ॥ ४०॥

नोधः सुवृत्तिं प्रभरा मरुद्भ्य इति नोधसः ॥ ४१॥

इन्द्रं समर्ये महया वसिष्ठेति वसिष्ठस्य ॥ ४२॥

वैयश्व दशमं नवमिति वैयश्वस्य विश्वमनसः ॥ ४३॥

अस्य मेघस्य सोम्यस्य सोभरे प्रेमध्वराय पूर्व्यमिति सोभरेः ॥ ४४॥

अनित्याख्या संवादकथा दर्शनात् ॥ ४५॥

तच्छ्रुतिसामान्यमात्रमिति चेत् ॥ ४६॥

तावदेषा न युक्तिर्यावदसम्पूर्णं सहस्रशो दृष्टानामनित्यवाचिनां नित्यपरं वो व्याख्यानम् ॥ ४७॥

दृष्टेषु युष्मत्पक्षपातिनामपि व्याख्यानानि वः प्रतिकूलानि ॥ ४८॥

एकाख्याव्याख्यानेन न चारितार्थ्यम् ॥ ४९॥

प्रवाहणश्च नाप्रसिद्धो यो जैवलिः पञ्चाग्निविद्याया उपदेष्टा ॥ ५०॥

असाध्यं च रूढिप्रकरणतात्पर्यप्रयोगस्वभावाविरोधेनानित्याख्या-संवादकथानां नित्यार्थान्तरकल्पनम् ॥ ५१॥

वाक्यबन्धस्य पुरुषप्रयत्नसापेक्षत्वाच्च ॥ ५२॥

परमेश्वरस्य वाक्यानि वेदास्तस्मात्प्रमाणमित्यन्ये ॥ ५३॥

ज्ञानप्रामाण्यस्य स्वतन्त्रत्वे कारणगुणार्थित्वे वा नात्र हानिः ॥ ५४॥

पदानां नित्यत्वे पुरुषयत्ननिबद्धवर्णावलीत्वे वा ॥ ५५॥

वाक्यार्थस्य पदार्थमात्रत्वे तदतिरिक्तत्वे वा ॥ ५६॥

शब्दार्थसम्बन्धस्य सहजत्वे सङ्केतितत्वे वा ॥ ५७॥

उत्तरपक्षे परमेश्वरसंङ्केतं शक्तिं ब्रूमः ॥ ५८॥

देवभाषाशब्दानामेव न लौकिकिभाषाशब्दानाम् ॥ ५९॥

उत्तरासु काश्चिद्विकृतयः ॥ ६०॥

काश्चित्स्वातन्त्र्येण मनुष्यसंङ्केतितास्तद्विकृतयश्च ॥ ६१॥

यो भागो यस्य द्वारा भूमाववतीर्णः स तस्यर्षिः ॥ ६२॥

एवमृषयो मन्त्रद्रष्टारः ॥ ६३॥

मन्त्रकृत उपचारात् ॥ ६४॥

परमेश्वरेणर्षिः सम्बोध्यते चेन्नानुपपन्नम् ॥ ६५॥

परमेश्वरस्य त्रिकालज्ञत्वादनित्याख्यासंवादकथादर्शनमविरुद्धम् ॥ ६६॥

वाक्यबन्धस्य पुरुषप्रयत्नसापेक्षत्वमत्र गुणः ॥ ६७॥

शाकलादीनां सङ्ग्राहकत्वेन संहिताकारत्वम् ॥ ६८॥

वेदानां पारमेश्वरत्वे किं प्रमाणमिति चेत् ॥ ६९॥

तस्माद्यज्ञात्सर्वहुत ऋचः सामानि जज्ञिरे छन्दांसि जज्ञिरे तस्माद्यजुस्तस्मादजायतेति निगमः ॥ ७०॥

अस्य महतो भूतस्य निःश्वसितं यदृग्वेदो यजुर्वेदः सामवेदोऽथर्वाङ्गिरस इति ब्राह्मणम् ॥ ७१॥

न प्रमाणत्वपरमेश्वरवाक्यत्वयोरितरेतराश्रयात् ॥ ७२॥

मन्त्रे विराट्पुरुषस्य प्रकृतत्वात्तस्य विश्वरूपत्वाद्विश्वस्मिन्कार्यं सर्वं तस्येति न साक्षादध्यक्षकार्यत्वसिद्धिः ॥ ७३॥

ब्राह्मणं च विश्वरूपस्य प्रकरणमवगम्यते ॥ ७४॥

अन्यथा पुराणेतिहासविद्याश्लोकसूत्रव्याख्यानानुव्याख्यानानां च साक्षात्परमेश्वरत्वं प्रसज्येत तेषां च महाभूतनिःश्वसितत्वेनोक्तेः ॥ ७५॥

ऋषिदर्शनात्प्रागेव सिद्धो मन्त्रो वः ॥ ७६॥

नेश्वरर्षिसमावशे पूर्वेण परमुद्दिश्योक्तः ॥ ७७॥

अतस्तत्रेश्वरेण कृतमृषिसम्बोधनं नोपपद्यते ॥ ७८॥

तस्मान्नेश्वरवाक्यानि वेदाः ॥ ७९॥

परिमितकालव्यक्त्याख्यासंवादकथादर्शनात् ॥ ८०॥

ऋषिसन्ततिमात्रपूजितत्वात् ॥ ८१॥

मन्त्रब्राह्मणयोर्भाषास्वरूपभेदात् ॥ ८२॥

मन्त्रेषु च ऋग्यजुरथर्वाङ्गिरसाम् ॥ ८३॥

एकत्रैव मन्त्रे संहिताभेदेन वर्णभेदात् ॥ ८४॥

पाठभेदात् ॥ ८५॥

स्वरितभेदात् ॥ ८६॥

यावदेकर्षिभाषाशैलीसादृश्यात् ॥ ८७॥

तद्भेदे तद्भेदात् ॥ ८८॥

वक्तृभेदपरिहार्येभ्यः पुनरुक्तिदोषेभ्यः ॥ ८९॥

देवतानां प्रत्यक्षस्तुतिभ्यः ॥ ९०॥

परार्थमिति चेद्यथार्थगुणवर्णनरूपाभ्यः परोक्षस्तुतिभिरेव चारितार्थ्याद् अनवसरः ॥ ९१॥

सचिवादिस्तुतिवद्यथार्थगुणवर्णनरूपा प्रत्यक्षस्तुतिरप्युपपद्यत इति चेत् ॥ ९२॥

भक्त्यनुपपत्तिः ॥ ९३॥

न हि त्वदन्यन्मघवन्न आप्यमित्याद्युदाहरणम् ॥ ९४॥

अर्थित्वानुपपत्तिः ॥ ९५॥

अश्वायन्तो मघवन्निन्द्र वाजिनो गव्यन्तस्त्वा हवामह इत्यद्युदाहरणम् ॥ ९६॥

आपन्निवारणप्रार्थनानुपपत्तिः ॥ ९७ ॥

हृद्रोगं मम सूर्य हरिमाणं च नाशयेत्याद्युदाहरणम् ॥ ९८ ॥

पापनिवारणप्रार्थनानुपपत्तिः ॥ ९९ ॥

क्षयन्नस्मभ्यमसुरप्रचेता राजन्नेनांसि शिश्रथःकृतानीत्याद्युदाहरणम् ॥ १०० ॥

भयानुपपत्तिः ॥ १०१ ॥

मानो मर्ता अभिद्रुहन्तनूनामिन्द्रगिर्वण इत्याद्युदाहरणम् ॥ १०२ ॥

स्तुतिषु कर्तृपदस्य स्पष्टमृषिपरत्वात् ॥ १०३ ॥

कुवित्पतिद्विषोयतीरिन्द्रेण सङ्गमामहै ॥ १०४ ॥

अवोचाम रहूगणा अग्नये मधुमद्वचः ॥ १०५ ॥

तं त्वा वयं पतिमग्नेरयीणां प्रशंसामो मतिभिर्गोतमासः ॥ १०६ ॥

इत्यादीनि प्रत्यक्षविधयोदाहरणानि ॥ १०७ ॥

तमुत्वा गोतमो गिरा रायस्कामो दुवस्यति ॥ १०८ ॥

अयं वां कृष्णो अश्विना हवते ॥ १०९ ॥

ता वां विश्वको हवते तनूकृथे ॥ ११०॥

शुनःशेपो ह्यह्वद्गृभीतस्त्रिष्वादित्यं द्रुपदेषु बद्धः ॥ १११॥

श्यावाश्वस्ते सवितः स्तोममानशे ॥ ११२॥

तस्मा उ ब्रह्मवाहसे गिरो वर्धन्त्यत्रयः ॥ ११३॥

इत्यादीनि परोक्षविधया ॥ ११४॥

औपम्यानुपपत्तेः ॥ ११५॥

अहं प्रत्नेन मन्मना गिरः शुम्भामिकण्ववदित्याद्युदाहरणम् ॥ ११६॥

कर्तरि षष्ठ्याश्चर्षिपरत्वात् ॥ ११७॥

प्रस्कण्वस्य श्रुधी हवम् ॥ ११८॥

श्रोता हवं जरितुरेवया मरुत् ॥ ११९॥

श्रुधी हवं तिरश्च्या इन्द्रयस्त्वा सपर्यति ॥ १२०॥

इत्यादीन्युदाहरणानि ॥ १२१॥

ऋषिकार्यत्वोक्तेः ॥ १२२॥

इन्द्राय ब्रह्मजनयन्त विप्राः ॥ १२३॥

यत्पाञ्चजन्यया विशेन्द्रे घोषा असृक्षत ॥ १२४॥

इमे हि ते ब्रह्मकृतः सुते सचामधौनमक्ष आसते ॥ १२५॥

इत्यादीन्युदाहरणानि ॥ १२६॥

स्पष्टमृषीणामात्मकृतिख्यानात् ॥ १२७॥

उत ब्रह्मण्या वयं तुभ्यं प्रवृद्धवज्रिवः विप्रा अतक्ष्म जीवसे ॥ १२८॥

एवा ते गृत्समदाः शूरमन्मा वस्यवो न वयुनानि तक्षुः ॥ १२९॥

स्वायवो मतिभिस्तुभ्यं विप्रा इन्द्राय वाहः कुशिकासो अक्रन् ॥ १३०॥

अध प्रियं शूषमिन्द्राय मन्मब्रह्मकृतो बृहदुक्थादवाचि ॥ १३१॥

एवाते हरियोजना सुवृक्तीन्द्रब्रह्माणि गोतमासो अक्रन् ॥ १३२॥

इत्यादीन्युदाहरणानि ॥ १३३॥

अहं राष्ट्री सङ्गमनी वसूनामित्यात्मस्तुतौ स्त्रीलिङ्गानुपपत्तेः ॥ १३४॥

इन्द्र ब्रह्म क्रियमाणा जुषस्व याते शविष्ठ नव्या अकर्मेति नव्यत्वानुपपत्तेः॥ १३५॥

अङ्गिरसां पूर्वपितृत्वानुपपत्तेः ॥१३६॥

ये नानः पूर्वे पितरः पदज्ञा अर्चन्तो अङ्गिरसो गा अविन्दन्नित्या-द्युदाहरणम् ॥१३७॥

दानस्तुतिभ्यश्च ॥१३८॥

अन्यान्यपि सन्ति साक्षात्पारमेश्वरत्वस्य प्रतिकूलान्यार्षत्वस्यानुकूलानि बहून्यूदाहरणानि निगमेषु ॥१३९॥

ब्राह्मणानि च नेश्वरवाक्यानि मध्यमकालभाषायोगात् ॥१४०॥

अर्वाचीनजीवव्यक्त्युपदेशानामेव विद्यासु प्राय उपन्यस्तत्वात् ॥१४१॥

आर्षमन्त्रव्याख्यानात् ॥१४२॥

विविधाचार्यमतप्रदर्शनात् ॥१४३॥

स्वोक्तिसाधनायार्षमन्त्राणां प्रमाणत्वेन प्रदर्शितत्वात् ॥१४४॥

मतभेददर्शनात् ॥१४५॥

शाखाभेदेन व्यवस्थार्थं भेदेनोपदेश इति चेत् ॥१४६॥

तत्कण्ठरवेण वक्तव्यं न चोक्तम् ॥१४७॥

असङ्गतिर्मतान्तरनिन्दायाः ॥१४८॥

अर्वाचीनश्च शाखाभेदः ॥१४९॥

शाखाभेदाद्धर्मस्वरूपं भिद्यत इति शपथमात्रम् ॥१५०॥

अनृतकथाबाहुल्यात् ॥१५१॥

विधिप्रशंसार्थवादा इति चेत् ॥१५२॥

प्रभोर्वाक्येषु नैतादृशी कूटनीतिर्युक्ता ॥१५३॥



आर्षदर्शनत्वान्निगमाः प्रमाणमिति वासिष्ठः ॥१५४॥

हृदयेन द्रष्टर्षिरुच्यते ॥१५५॥

तादृशं दर्शनमार्षदर्शनम् ॥१५६॥

हृदयमन्यन्मनसः ॥१५७॥

जुष्टानि सन्तु मनसे हृदे चेत्यादौ भेदनिर्देशात् ॥१५८॥

अभ्यासनिगृहीतेन मनसा हृदयाश्रयमिति लौकिकश्च कविप्रयोगः ॥१५९॥

अन्तर्यामिस्थानमित्युक्तं भवति ॥१६०॥

2

अत एव हृदि विश मनसा स्वं चिन्वता मज्जतावेत्याचार्याः ॥ १६१ ॥

यावदिन्द्रियैर्गृह्णाति तावन्मनसो विषयः ॥ १६२ ॥

अतीन्द्रियेष्वपि हृदयस्य गतिरन्तर्यामिकरणत्वात् ॥ १६३ ॥

तदानन्दमयात्कोशान्नातिरिच्यत इति वासिष्ठः ॥ १६४ ॥

मनोहृदययोर्मध्ये विज्ञानात्मायं जीवं व्यवहरन्ति ॥ १६५ ॥

तस्य स्वभावतो मनःकरणम् ॥ १६६ ॥

वाचा सह चक्षुरादीनि मनोवशवर्तीनि भवन्ति ॥ १६७ ॥

हृदयं करणं स्यात्स यदि स्वमूलरूपेऽन्तरात्मनि प्रतिष्ठां विन्देत् ॥ १६८ ॥

तदा तस्य मनोवाग्धीन्द्रियाणि च हृदयवशवर्तीनि भवन्ति ॥ १६९ ॥

हृदयं स्वयं पश्येन्मनः सहकृतैरिन्द्रियैश्च पश्येत् ॥ १७० ॥

पूर्वज्ञानमलौकिकम् ॥ १७१ ॥

उत्तरं लोकसाधारणम् ॥ १७२ ॥

उभयं चार्षं दर्शनं हृदयमूलकत्वात् ॥ १७३ ॥

ऋषिभिर्वाक्यात्मना निबद्धान्यात्मदर्शनानि निगमाः ॥ १७४॥

तत्र पद्यगद्यगीतीनामृग्यजुःसामाख्या ॥ १७५॥

अथर्वाङ्गिरसां यथा लक्षणमृग्यजुषोरन्तर्भावः ॥ १७६॥

त्रयीपूर्तेरनन्तरमुत्पन्नत्वात्पृथगभिधानम् ॥ १७७॥

प्रामाण्ये गीतीनामसहकारित्वेन सामवेदोऽनर्थक इति चेत् ॥ १७८॥

वेदाः पवित्रभजनग्रन्थो न केवलं प्रमाणग्रन्थः ॥ १७९॥

गीतीनां सुतरां भजनोपयोगित्वात्सार्थक्यम् ॥ १८०॥

प्राचीनपद्धत्यैव गेया इति निगमो नोपपद्यत इति चेत् ॥ १८१॥

स केवलं साम्प्रदायिकः ॥ १८२॥

नवापि शास्त्रीया पद्धतिरनिषिद्धा ॥ १८३॥

केवलहार्दार्षदर्शनानुवादिनां निगमानां योगप्रत्यक्षानुवादित्वम् ॥ १८४॥

करणान्तरसहकृतहार्दार्षदर्शनानुवादिनां प्रत्यक्षानुवादित्वम् अनुमाना-
नुवादित्वं वा ॥ १८५॥

उत्तरत्रापि न भ्रमादिसम्भवो ज्ञानस्य दिव्यकरणानुगृहीतत्वात् ॥ १८६॥

सहकारिदोषाद्दोषसम्भव इति चेत् ॥१८७॥

हृदयशक्तिसहकृतानां न दोषावकाशः ॥१८८॥

प्रसिद्धेर्निगमानामार्षदर्शनत्वावगतिः ॥१८९॥

पारमेश्वरत्वप्रसिद्धिश्च नैतत्प्रतिकूला ॥१९०॥

वेदाः काव्यानि वेधस उच्यन्ते करणस्य तदीयत्वात् ॥१९१॥

ऋषीणामुच्यन्ते तेषां द्रष्टृत्वात् ॥१९२॥

ईश्वरस्य शक्तिर्जीवस्य व्युत्पत्तिश्च वेदोत्पत्तौ हेतुः ॥१९३॥

विदन्तीमत्र नरो धियंधाहृदा यत्तष्टान्मन्त्राँ अशंसन्निति निगमोऽत्र भवति ॥१९४॥

वेदो निगमो मन्त्रो ब्रह्म चेत्येकार्थानि पदानि ॥१९५॥

ब्राह्मणानि च वेदा इति चेत् ॥१९६॥

नादर्शनत्वात् ॥१९७॥

ऋग्यजुस्सामाथर्वमात्रविशेषणेभ्यः ॥१९८॥

तत्पारायणस्यैव ब्रह्मयज्ञत्वात् ॥१९९॥

ब्रह्मयज्ञः स्वाध्यायाभ्यसनमित्यनर्थान्तरम् ॥ २०० ॥

भेदेन व्यपदेशाच्च ॥ २०१ ॥

वेदानुबन्धित्वात्तेषां वेदाख्या भाक्ता ॥ २०२ ॥

तेषु कर्मकाण्डं देवताराधनकल्पग्रन्थः ॥ २०३ ॥

कर्तुमकर्तुं प्रकारान्तरेण वा कर्तुं शक्याः कल्पाः ॥ २०४ ॥

पवित्रमन्त्रावलम्बनत्वात्सत्यदेवतापरत्वाच्च ब्राह्मणोक्ताः कल्पाः श्रेयसे निःसंशयं येषु न हिंसा ॥ २०५ ॥

येषु हिंसा तत्र संशयः पुण्यपापयोर्मिश्रत्वात् ॥ २०६ ॥

तदुत्तरं विचारयिष्यामः ॥ २०७ ॥

उपनिषत्स्वीशोपनिषत्प्रामाण्यं निगमैर्व्याख्यातम् ॥ २०८ ॥

अन्या आचार्यपरम्पराप्राप्तरहस्यविद्यानिबन्धनग्रन्थाः ॥ २०९ ॥

यावत्यो बादरायणेन मीमांसितास्तस्य साकल्येन तन्मीमांसकत्वात् ॥ २१० ॥

अन्या अर्वाचामवेदशाखानुबद्धाः ॥ २११ ॥

तासां तत्तद्वेदानुबद्धत्वेन प्रदर्शनं गौरवार्थं कल्पनावैभवम् ॥ २१२॥

रहस्यविद्यानां मूलमार्षदर्शनमिति तासां तद्वत्प्रामाण्यम् ॥ २१३॥

निगमेषु द्रष्टार एव ग्रन्थकृत उपनिषत्सु परम्परोपदिष्टार्था इति विशेषः ॥ २१४॥

एकैका मन्त्रसंहिता ऋक्सामाथर्वाङ्गिरसाम् ॥ २१५॥

यजुषां द्वे शुक्ला कृष्णा चेति ॥ २१६॥

उत्तरा पञ्चकाण्डैव ग्राह्या ॥ २१७॥

इतर इतरत्र ग्रहणं संहिताकारस्य कृत्यम्॥ २१८॥

ऋक्संहिताक्रमो ग्राह्य ऋचामर्थविचारे ॥ २१९॥

ऋक्संहितापाठः पाठभेदेषु यथादृष्टविचारे ॥ २२०॥

पाठभेदः साम्प्रदायिक इत्येके ॥ २२१॥

प्रामादिक एवेति वासिष्ठः ॥ २२२॥

मन्त्रसंहिताः पञ्च, केन-कठ-प्रश्न-मुण्डक-माण्डूक्य-तैत्तिरीयैतरेय-च्छान्दोग्य-बृहदारण्यक-श्वेताश्वतर-कौषीतिकिब्राह्मणोपनिषद एकादश चेति षोडशप्रमाणग्रन्थाः प्रमाणगन्थाः॥ २२३॥

## द्वितीयोऽध्यायः

### वाक्यप्रामाण्यपद्धतिविचारः

मन्त्रेषु भावार्थकर्मशब्दाभावान्न तैरपूर्वं विधीयते ॥ १॥

तेष्वप्याख्यातानि सन्तीति चेत् ॥ २॥

प्रयोगेषु यज्ञाङ्गप्रकाशनमात्रेण गतार्थत्वात्पुनर्विधातुमशक्तिः ॥ ३॥

न त्वेष न्यायः प्रमाणस्य सतः पवित्रतातिशयादभ्युदयाय प्रयुक्तत्वात् ॥ ४॥

एकत्रैकप्रकाशनेन गतार्थत्वेऽन्यत्रान्यप्रकाशनस्यानुपपत्तिः ॥ ५॥

मन्त्रैरिष्टानि साधयितुं ब्राह्मणस्थकर्मकल्पाः पुरुषाणाम् ॥ ६॥

न कर्मकल्पानामङ्गानि मन्त्राः ॥ ७॥

उपकार्योपकारकभावस्तेषां परस्परम् ॥ ८॥

सिद्धेषु मन्त्रेष्वनन्तरं हि कर्मकल्पाः प्रवृत्ताः ॥ ९॥

उक्तो मन्त्रब्राह्मणयोः पौर्वापर्यभावः ॥ १०॥

तथापि कर्मकल्पं विना मन्त्राणामानर्थक्यम् ॥ ११॥

अभिधानचोदकत्वान्मन्त्रस्याभिधानस्य च क्रियानन्वये प्रयोजनाभावात् ॥१२॥

क्रियाविधायकत्वमप्यस्त्विति चेत् ॥१३॥

न विधायकशब्दाभावात् ॥१४॥

फलकथनाद्विधिकल्पनमिति चेत् ॥१५॥

वाक्यभेदः ॥१६॥

अयमेव भावार्थः कर्मशब्दो यत् क्रियाविधायको न सर्वमाख्यातम् ॥१७॥

भावश्च कस्यचिन्निष्पत्तिः ॥१८॥

भूतिर्भवनं भाव इत्यनर्थान्तरम् ॥१९॥

यजेतेत्यस्य यागेन किमपि भावयेदित्यर्थः स्यात् ॥२०॥

तद्भाव्यं स्वर्गादिफलं यागोत्पन्नापूर्वसाध्यम् ॥२१॥

अपूर्वमाख्यातस्यार्थः ॥२२॥

एवमपूर्वचोदकत्वं विधिशब्दानाम् ॥२३॥

चोद्यत इत्यपूर्वं चोदना ॥ २४॥

तस्माद्धर्मो नातिरिच्यते धर्मस्य चोदनालक्षणार्थत्वात् ॥ २५॥

अपूर्वोत्पादकं कर्म वा धर्मः ॥ २६॥

तस्यापि चोदनालक्षणार्थत्वात् ॥ २७॥

चोदनया लक्ष्यत इत्यत्र नयः ॥ २८॥

चोदना चात्र प्रवर्तकं वचनम् ॥ २९॥

उभयत्राप्यपूर्वस्य विध्यर्थकाख्यातप्रतिपाद्यत्वं तुल्यम् ॥ ३०॥

नैषा युक्तिर्यागेन स्वर्गं भावयेदिति भवतां नयात् ॥ ३१॥

अयं चार्थिनः स्वर्गकामत्वे ॥ ३२॥

यथाकामं भावनमित्युक्तं भवति ॥ ३३॥

कामानुरूपाणि यथा श्रुतिकर्माणि ॥ ३४॥

एवं स्थिते स्वर्गस्य सिद्धत्वेनानुत्पाद्यत्वादर्थासङ्गतिः ॥ ३५॥

स्वर्गो न लोकः सुखमात्रस्य तदाख्येति चेत् ॥ ३६॥

प्रसिद्धार्थपरित्यागोऽप्रसिद्धार्थकल्पनं च ॥ ३७॥

अनुत्पत्तेर्विरोधान्मुख्यार्थपरित्यागेन लक्ष्यार्थग्रहणमिति चेत् ॥ ३८॥

न स्वर्गोत्पत्तेर्वचनेनानुक्तत्वात् ॥ ३९॥

पशुकाश्रुतावितोऽपि स्पष्टं विरोधोदाहरणम् ॥ ४०॥

सर्वत्र यथाश्रुतकामसाधकमपूर्वं भावयेदिति नय एव स्वीक्रियत इति चेत् ॥ ४१॥

तत्किं रूपम् ॥ ४२॥

अदृष्टमनिर्वचनीयमिति चेत् ॥ ४३॥

तादृशं विचित्रपदार्थं मापयितुं कस्य शक्तिः ॥ ४४॥

न ब्राह्मणवचनस्याप्रमाणत्वात् ॥ ४५॥

तद्भिनापौरुषेयं न चेश्वरवाक्यं नवार्षदर्शनम् ॥ ४६॥

तथा यदि तदुक्तं कर्म कथं श्रेयस इति चेत् ॥ ४७॥

उक्तो हेतुरुक्तश्चैकदेशे संशयः ॥ ४८॥

प्रमाणत्वे वा न शक्तिरसम्बद्धं बोधयितुं सति सम्बद्धे ॥ ४९॥

धनार्थी राजानमाश्रयेतेति लौकिकनीतिवाक्यं आश्रयणेन राज्ञः प्रीतिं भावयेत्ततो धनलाभः स्यादित्यर्थो भवति ॥ ५० ॥

एवं ज्योतिष्टोमेन स्वर्गकामो यजेतेत्यत्र यागेन देवताप्रीतिं भावयेत्ततः स्वर्गलाभः स्यादित्यर्थो भवेदृजुना पथा ॥ ५१ ॥

यजेर्देवताराधनार्थत्वात् ॥ ५२ ॥

तथा भङ्गी यागो न निष्फलः स्यात् ॥ ५३ ॥

यागे भङ्गिन्यपीष्टदेवताप्रीतेरभङ्गित्वात् ॥ ५४ ॥

लोके च काम्यकर्मसु समुद्दिष्टदेवताप्रीत्यर्थमित्यारम्भसङ्कल्पो नापूर्वोत्पादनार्थमिति ॥ ५५ ॥

देवताप्रीयतामित्युपसंहारो नापूर्वमुत्पाद्यतामिति ॥ ५६ ॥

देवताकल्पितेति चेत् ॥ ५७ ॥

मन्त्राणामभिधानवाचित्वेन प्रामाण्यस्य हानिः ॥ ५८ ॥

अग्निवायुसूर्यादौ तन्नामप्रयोगाज्जडेति चेत् ॥ ५९ ॥

स एवैनं भूतिं गमयतीत्याद्यनुपपत्तिः ॥ ६० ॥

बहुलं विचारयिष्याम एतद्देवतास्थापनाध्याये ॥ ६१ ॥

तथापि यागं विना मन्त्रदेवतयोरानर्थक्यम् ॥ ६२॥

यागश्च मन्त्रैर्न बोध्यते ॥ ६३॥

उक्तो हेतुरुक्तश्च विधिकल्पने विरोधः ॥ ६४॥

न त्वस्ति मन्त्राणामभिधानवाचित्वमेवेति नियमः ॥ ६५॥

तेषां च लौकिकवाक्यवदेवार्थेषु गतिः ॥ ६६॥

भूते भव्ये चेति शब्दप्रमाणस्य गतिर्द्वेधा प्राचाम् ॥ ६७॥

सिद्धं वस्तु भूतम् ॥ ६८॥

तदभिधानं जैमिनेर्भाषायाम् ॥ ६९॥

द्रव्यं गुणो वा नव्यानाम् ॥ ७०॥

साध्यं कर्म भव्यम् ॥ ७१॥

पूर्वत्र वस्तुस्वरूपकथनम् ॥ ७२॥

उत्तरत्र कर्तव्यत्वोपदेशः ॥ ७३॥

तत्त्वज्ञानस्य मोक्षहेतुत्वात् सिद्धवस्तुस्वरूपकथनं प्रयोजनवदिति वेदान्तिनः ॥ ७४॥

क्रियाङ्गवस्तुज्ञानं क्रियासम्पत्तये तस्मात्प्रयोजनवदिति मीमांसकाः ॥ ७५ ॥

प्रयोजनवानर्थ एव वेदप्रतिपाद्य इत्युभये ॥ ७६ ॥

भूतार्थवादस्य स्वार्थे प्रमाणत्वेऽपि न साक्षात्प्रयोजनवत्त्वं तस्मात्स च शेष इति तेषां दृष्टिः॥ ७७ ॥

शब्दप्रमाणस्यापि प्रमाणान्तरवत्प्रयोजनानपेक्षयैव गतिरिति वासिष्ठः ॥ ७८ ॥

प्रमातैव प्रमेयान्तरवच्छब्दप्रमेयेऽपि प्रयोजनं मृगयते ॥ ७९ ॥

तत्रेतरापेक्षया तस्याधिकः प्रयोजनलाभ इति विशेषः ॥ ८० ॥

नैवं शब्दप्रमाणान्तरयोर्भेदात् ॥ ८१ ॥

आप्तो हि दृष्टमर्थं यावत्प्रयोजनं ग्रन्थे निदध्यात् ॥ ८२ ॥

नत्वेष नियमः कवीनाम् ॥ ८३ ॥

कवयो हि विश्रृङ्खलाः ॥ ८४ ॥

तन्त्रेषूक्तस्य पुनर्वचनं सर्वथा दोषाय ॥ ८५ ॥

काव्येषूक्तस्य भङ्ग्यन्तरेण पुनर्वचनं शोभायै ॥ ८६ ॥

त्वां स्तोमा अवीवृधन्त्वामुक्था शतक्रतो त्वां वर्धन्तु नो गिर इति स्तुत्वा ॥ ८७॥

इन्द्रमिद्गाथिनो बृहदिन्द्रमर्केभिरर्किणः इन्द्रं वाणीरनूषतेति भङ्ग्यन्तरेण पुनरिन्द्रं स्तौति मधुच्छन्दा ऋषिः ॥ ८८॥

एक एवर्षिणा दृष्टोऽर्थो मन्त्रद्वये वर्णितः ॥ ८९॥

अन्यतरोऽनर्थकस्तन्त्रदृष्ट्या ॥ ९०॥

उभयं च चारु काव्यदृष्ट्या ॥ ९१॥

लोकसिद्धार्थप्रतिपादनं तन्त्रेषु दोषाय ॥ ९२॥

तदेव सालङ्कारं चेत्काव्येषु शोभायै ॥ ९३॥

इभ्यान्न राजा वनान्यत्तीति स्तौत्यग्निं पराशर ऋषिः ॥ ९४॥

इदमनर्थकं तन्त्रदृष्ट्या ॥ ९५॥

चारु काव्यदृष्ट्या ॥ ९६॥

अलङ्कारास्तन्त्रेष्वनावश्यकाः ॥ ९७॥

काव्येषु शोभायै ॥ ९८॥

उक्तमर्थालङ्कारोदाहरणम् ॥ ९९॥

त्रातारमिन्द्रमवितारमिन्द्रं हवे हवे सुहवं शूरमिन्द्रमित्यादौ शब्दालङ्काराश्च दृश्यन्ते ॥ १००॥

वृत्तार्थानुवादो विधेः पोषक एव तन्त्रेषु भवति ॥ १०१॥

काव्येषु स्वतन्त्रः ॥ १०२॥

अत्रार्षकाव्येषु दानस्तुत्यादय उदाहरणम् ॥ १०३॥

इत्यादि वैलक्षण्यं तन्त्रेभ्यः काव्यानाम् ॥ १०४॥

निगमांस्तन्त्रीकर्तुं तन्त्रविदां यत्नः ॥ १०५॥

# विश्वमीमांसा (४)

## प्रथमोऽध्यायः

### वेदप्रामाण्यचर्चा

वेदाः कर्त्रनुपलब्धेरपौरुषेयाः ॥ १ ॥

कारणाभावेन तद्दोषशङ्कानवकाशात्प्रमाणम् ॥ २ ॥

ज्ञानं हि स्वतः प्रमाणं कारणदोषावधारणं तत्प्रामाण्यापवादः ॥ ३ ॥

अन्यथाऽनवस्था ॥ ४ ॥

शब्दस्योत्पत्तेर्नेति चेत् ॥ ५ ॥

अभिव्यक्तिरविद्ययोत्पत्तिरुच्यते ॥ ६ ॥

शब्दार्थसम्बन्धस्य कृत्रिमत्वात्पौरुषेया इति चेत् ॥ ७ ॥

असिद्धो हेतुर्व्यवहारस्यानादित्वात् ॥ ८ ॥

पौरुषेयास्तु वाक्यरचनस्य पुरुषयत्नापेक्षित्वात् ॥ ९॥

नामकरणात्कालभेदेन भेदाद्भाषाबाहुल्याच्च शब्दार्थसम्बन्धस्यासहज - त्वावगतेः ॥ १०॥

वाक्यार्थस्य मतित्वात् ॥ ११॥

मधुच्छन्दः प्रभृतीनां कर्तृणामुपलब्धेः ॥ १२॥

प्रवचनादाख्या इति चेत् ॥ १३॥

अबाधे मुख्यार्थस्याहानम् ॥ १४॥

ऋषिरुच्यते न कविरिति चेत् ॥ १५॥

यस्य वाक्यं स ऋषिरिति प्रसिद्धेः पूजितकविपर्याय ऋषिः ॥ १६॥

वेदानां नित्यत्वादाख्या गौणत्वमिति चेत् ॥ १७॥

नित्यत्वाख्यागौणत्वकर्त्रनुपलब्धीनामितरेतराश्रयत्वाच्चक्रकम् ॥ १८॥

अत एवर्षयो मन्त्रद्रष्टार उच्यन्ते न मन्त्राध्यापकाः ॥ १९॥

मन्त्राणां दर्शनायोग्यत्वाद्गौणो व्यवहार इति चेत् ॥ २०॥

अविपर्यस्तबुद्धार्थापेक्षया ॥ २१॥

शब्दापेक्षया मन्त्रकृतः ॥ २२॥

नमो मन्त्रकृद्भ्य इति ब्राह्मणम् ॥ २३॥

सुकर्मपापमन्त्रपुण्येषु कृञ इति पाणिनिः ॥ २४॥

वाचा विरूपनित्ययेति वचनप्रामाण्यान्नित्यत्वमिति चेत् ॥ २५०॥

नित्यत्वप्रमाणत्वयोरितरेतराश्रयः ॥ २६॥

सततयेति त्वर्थोऽग्निस्तुतिप्रेरणप्रकृतत्वात् ॥ २७॥

नित्याग्निहोत्रादाविवार्थसङ्गतिः ॥ २८॥

ऋषिणा विरूपेत्यात्मा सम्बोध्यत इति स्पष्टमार्षत्वम् ॥ २९॥

विरूपनित्ययेत्येकं पदमिति चेत् ॥ ३०॥

न पृथक्पदपाठात् ॥ ३१॥

अन्यत्र च निगमेषु नोधोवसिष्ठसोभरिप्रभृतीनां ऋषिणामात्मसम्बोधनानि दृश्यन्ते ॥ ३२॥

अनित्याख्यासंवादकथा दर्शनाच्च ॥ ३३॥

तच्छ्रुतिसामान्यमात्रमिति चेत् ॥ ३४॥

रूढिप्रकरणतात्पर्यप्रयोगस्वभावाविरोधेन तथा व्याख्यातुमशक्यत्वाद् अयुक्तिः ॥ ३५॥

युष्मत्पक्षपातिनां व्याख्यानानि च वः प्रतिकूलानि ॥ ३६॥

एकाख्याव्याख्यानेन न चारितार्थ्यम् ॥ ३७॥

प्रवाहणश्च नाप्रसिद्धो यो जैवलिः पञ्चालानां राजापञ्चाग्निविद्याया उपदेष्टा ॥ ३८॥

ईश्वरस्य वाक्यानि वेदास्तस्मात्प्रमाणम् ॥ ३९॥

तस्माद्यज्ञादिति मन्त्रवर्णात्तदवगतिः ॥ ४०॥

अस्य महतो भूतस्येति ब्राह्मणवाक्याच्च ॥ ४१॥

यो भागो यस्य द्वारा भूमाववतीर्णः स तस्यर्षिः ॥ ४२॥

एवमृषयो मन्त्रद्रष्टारः ॥ ४३॥

मन्त्रकृत उपचारात् ॥ ४४॥

ईश्वरेणर्षिः सम्बोध्यते चेन्नानुपपन्नम् ॥ ४५॥

ईश्वरस्य त्रिकालज्ञत्वादनित्याख्यासंवादकथादर्शनमविरुद्धम् ॥ ४६॥

पुरुषविशेषत्वात्पौरुषेयत्वम् ॥ ४७॥

शाकलादीनां सङ्ग्राहकत्वेन संहिताकारत्वम् ॥ ४८॥

नवा प्रागेव सिद्धे मन्त्रेऽर्वाचीनसम्बोधनस्यानुपपन्नत्वात् ॥ ४९॥

परिमितकालव्यक्त्याख्यासंवादकथानामेव दर्शनात् ॥ ५०॥

मन्त्रे विश्वरूपस्य प्रकृतत्वात्सर्वस्य कार्यं तस्येति न साक्षादीश्वरकार्यत्वसिद्धिः ॥ ५१॥

अन्यथाऽश्वादीनां च साक्षादीश्वरकार्यत्वप्रसक्तिः ॥ ५२॥

ब्राह्मणं च विश्वरूपस्य प्रकरणमवगम्यते ॥ ५३॥

अन्यथा पुराणेतिहासविद्याश्लोकसूत्रव्याख्यानानुव्याख्यानानां च साक्षादीश्वरकार्यत्वप्रसक्तिः ॥ ५४॥

ऋषिसन्ततिमात्रपूजितत्वात् ॥ ५५॥

मन्त्रब्राह्मणयोर्भाषास्वरूपभेदात् ॥ ५६॥

मन्त्रेषु च ऋग्यजुरथर्वाङ्गिरसाम् ॥ ५७॥

एकत्रैव मन्त्रे संहिताभदेन वर्णभेदात् ॥ ५८॥

स्वरितभेदात् ॥ ५९॥

यावदेकर्षिनिगमेषु भाषाशैलीसादृश्यात् ॥ ६० ॥

तत्रद्भेदे तद्भेदात् ॥ ६१ ॥

वक्तृभेदपरिहार्येभ्यः पुनरुक्तिदोषेभ्यः ॥ ६२ ॥

देवतानां प्रत्यक्षस्तुतिभ्यः ॥ ६३ ॥

परार्थमिति चेत्परोक्षस्तुतिभिरेव चारितार्थ्यादनवसरः ॥ ६४ ॥

सचिवादिस्तुतिवदिति चेत् ॥ ६५ ॥

न हि त्वदन्यन्मघवन्न आप्यमित्यादौ भक्तेरनुपपत्तिः ॥ ६६ ॥

अश्वायन्तो मघवन्नित्यादावर्थित्वस्य ॥ ६७ ॥

मानो मर्ता अभिद्रुहन्नित्यादौ भयस्य ॥ ६८ ॥

हृद्रोगं मम सूर्येत्यादौ रोगस्य ॥ ६९ ॥

राजन्नेनांसि शिश्रर्थः कृतानीत्यादौ पापस्य ॥ ७० ॥

अवोचाम रहूगणा अग्नये मधुमद्वच इत्यादौ कर्तृपदस्य स्पष्टम् ऋषिपरत्वात् ॥ ७१ ॥

अहं प्रत्नेन मन्मना गिरः शुम्भामिकण्ववदित्यादावौपम्यस्यानुपपत्तेः ॥ ७२ ॥

प्रस्कण्वस्य श्रुधीहवमित्यादौ सम्बन्धस्य ॥ ७३॥

अहं राष्ट्री सङ्गमनी वसूनामित्यात्मस्तुतौ स्त्रीलिङ्गस्य ॥ ७४॥

अहं मनुरभवमित्यात्मस्तुतेर्वामदेव्यत्वस्य ॥ ७५॥

इन्द्र ब्रह्म क्रियमाणा जुषस्व याते शविष्ठ नव्या अकर्मेति नव्यत्वस्य ॥ ७६॥

ये ना नः पूर्वे पितरः पदज्ञा अर्चन्तो अङ्गिरसो गा अविन्दन्नित्यादावङ्गि-रसां स्वपूर्वपितृत्वानुकीर्तनस्य ॥ ७७॥

दानस्तुतीनां च ॥ ७८॥

इन्द्राय ब्रह्मजनयन्त विप्रा इत्यादावृषिकार्यत्वोक्तेः ॥ ७९॥

एवा ते हरियोजनासुवृक्तीन्द्रब्रह्माणि गोतमासो अक्रन्नित्यादौ स्पष्टम् ऋषीणामात्मकृतिख्यानात् ॥ ८०॥

ब्राह्मणेष्ववर्वाचीनजीवव्यक्त्युपदेशानामेव विद्यासु प्राय उपन्यस्तत्वात् ॥ ८१॥

विविधाचार्यमतप्रदर्शनात् ॥ ८२॥

मतभेददर्शनात् ॥ ८३॥

शाखाभेदेन व्यवस्थार्थं भेदेनोपदेश इति चेत् ॥ ८४॥

तत्कण्ठरवेण वक्तव्यं न चोक्तम् ॥ ८५॥

असङ्गतिर्मतान्तरनिन्दायाः ॥ ८६॥

अर्वाचीनश्च शाखाभेदः ॥ ८७॥

शाखाभेदाद्धर्मस्वरूपं भिद्यत इति शपथमात्रम् ॥ ८८॥

अनृतकथाबाहुल्यात् ॥ ८९॥

विधिप्रशंसार्थवादा इति चेत् ॥ ९०॥

प्रभोर्वाक्येषु नैतादृशी कूटनीतिर्युक्ता ॥ ९१॥

व्याख्यानभेदात् ॥ ९२॥

बहुभक्तित्वाच्च ॥ ९३॥

आर्षदर्शनत्वान्निगमाः प्रमाणमिति वासिष्ठः ॥ ९४॥

हृदयेन दृष्टर्षिस्तादृशं दर्शनमार्षम् ॥ ९५॥

हृदयमन्यन्मनसो जुष्टानि सन्तुमवसे हृदे चेत्यादौ भेदेन निर्देशात् ॥ ९६॥

अत एव हृदि विश मनसा स्वं चिन्वता मज्जता वेत्याचार्याः ॥ ९७॥

अभ्यासनिगृहीतेन मनसा हृदयाश्रयमिति महाकवेश्च प्रयोगः ॥ ९८ ॥

अन्तर्यामिस्थानमित्युक्तं भवति ॥ ९९ ॥

यावदिन्द्रियैर्गृह्णाति तावन्मनसो विषयः ॥ १०० ॥

अतीन्द्रियेष्वपि हृदयस्य गतिरन्तर्यामिकरणत्वात् ॥ १०१ ॥

स आनन्दमयः कोशो निद्रासमाध्योस्तत्रैव भवनात् ॥ १०२ ॥

मनोहृदययोर्मध्ये विज्ञानात्मायं जीवं व्यवहरन्ति ॥ १०३ ॥

तस्य स्वभावतो मनःकरणम् ॥ १०४ ॥

हृदयं योऽन्तरात्मनि प्रतिष्ठां विन्देत् ॥ १०५ ॥

हृदयं स्वयं च पश्येन्मनः सहकृतैरिन्द्रियैश्च पश्येत् ॥ १०६ ॥

पूर्वं ज्ञानमलौकिकम् ॥ १०७ ॥

उत्तरं लोकसाधारणम् ॥ १०८ ॥

तस्मान्निगमेषु लोकसाधारणाश्च प्रसङ्गात् ॥ १०९ ॥

उभयत्र प्रामाण्यं तुल्यं हृदयमूलकत्वस्य तुल्यत्वात् ॥ ११० ॥

ऋषिभिर्वाक्यात्मना निबद्धान्यात्मदर्शनानि वेदाः ॥ १११ ॥

प्रसिद्धेर्निगमानामार्षदर्शनत्वावगतिः ॥११२॥

हृदायत्तष्टान्मन्त्राँ अशंसन्निति निगमश्चात्र भवति ॥११३॥

प्रमाणत्वार्षदर्शनत्वयोरितरेतराश्रय इति चेत् ॥११४॥

कर्तृसाक्ष्यमात्रप्रदर्शनार्थमुदाहरणम् ॥११५॥

न वा दोषः कर्तृसाक्ष्यार्षदर्शनयोर्भेदात् ॥११६॥

आप्तवाक्यत्वसामान्यादुभयमभिन्नमिति चेत् ॥११७॥

सामान्यादभेदो भाक्तो विशेषः प्रकृतश्चेत् ॥११८॥

पारमेश्वरत्वप्रसिद्धिरप्यस्तीति चेत् ॥११९॥

वेदाः काव्यानि वेधस उच्यन्ते करणस्य तदीयत्वात् ॥१२०॥

ऋषीणामुच्यन्ते तेषां दृष्टृत्वात् ॥१२१॥

ईश्वरस्य शक्तिर्जीवस्य व्युत्पत्तिश्च वेदोत्पत्तौ हेतुः ॥१२२॥

अन्तरात्मनि प्रतिष्ठितोऽपि विज्ञानात्मा पृथग्जीवेद्यावन्मनसः सत्ता ॥१२३॥

ऋचो यजूंषि सामान्यथर्वाङ्गिरसश्च वेदाः ॥१२४॥

वेदो निगमो मन्त्रो ब्रह्म चेत्येकार्थानि पदानि ॥१२५॥

प्रामाण्ये गीतिनामसहकारित्वेन ऋग्भिः सामानि गतार्थानीति चेत् ॥१२६॥

न गाने धर्मविशेषात् ॥१२७॥

वेदाः पवित्रभजनग्रन्थो न केवलं प्रमाणग्रन्थः ॥१२८॥

ब्राह्मणानि च वेदा इत्येके ॥१२९॥

नादर्शनत्वात् ॥१३०॥

ऋगादिमात्रविशेषणेभ्यः ॥१३१॥

ततपारायणस्यैव ब्रह्मयज्ञत्वात् ॥१३२॥

भेदेन व्यपदेशाच्च ॥१३३॥

वेदानुबन्धित्वात्तेषां वेदाख्या ॥१३४॥

तेषु कर्मकाण्डं देवताराधनकल्पग्रन्थः ॥१३५॥

उपनिषद आचार्यपरम्पराप्राप्तरहस्यविद्यानिबन्धनग्रन्थाः ॥१३६॥

तासां मूलमार्षदर्शनमिति तद्वत्प्रमाण्यम् ।।१३७॥

निगमेषु द्रष्टार एव ग्रन्थकृत उपनिषत्सु परम्परोपदिष्टार्था इति विशेषः ॥१३८॥

मन्त्रब्राह्मणातिरिक्ता अर्वाचामवेदशाखानुबद्धाः ॥१३९॥

तासां वेदशाखानुबद्धत्वोक्तिर्गौरवार्थं कल्पनावैभवम् ॥१४०॥

कर्तुमकर्तुमन्यथाकर्तुं वा शक्याः कल्पा इति तत्प्रामाण्यं वैकल्पिकम् ॥१४१॥

अप्रामाण्यमदर्शनत्वादिति चेत् ॥१४२॥

न पवित्रमन्त्रावलम्बनत्वात्सत्यदेवतापरत्वाच्च ॥१४३॥

## द्वितीयोऽध्यायः

### वेदवाक्यप्रामाण्यपद्धतिविचारः

मन्त्रेषु भावार्थककर्मशब्दाभावान्न तैः क्रिया विधीयते ॥१॥

स्पष्टं क्रियाविधायककर्मशब्दो भावार्थः ॥२॥

भावश्च कस्यचिन्निष्पत्तिः ॥३॥

यजेतेत्यस्य यागेन किमपि भावयेदित्यर्थः स्यात् ॥४॥

तङ्कद्भाव्यं स्वर्गादिफलम् ॥५॥

यजेर्भङ्गित्वाद्भावनार्थमपूर्वमाख्यातप्रतिपाद्यमङ्गीकर्तव्यम् ॥६॥

ब्राह्मणेष्वेव तादृशानि विधिवाक्यानि ॥ ७॥

मन्त्राणां यथा शास्त्रं कर्मसु विनियोगात्सार्थक्यम् ॥ ८॥

प्रामाण्यं च कर्माङ्गदेवमादिप्रकाशकत्वात् ॥ ९॥

तस्मादभिधानवाची मन्त्रः ॥ १०॥

अभिधानं च द्रव्यं गुणो वा प्रायः ॥ ११॥

तस्य क्रियाङ्गत्वान्मन्त्राणां ब्राह्मणाङ्गत्वम् ॥ १२॥

न वा मन्त्रेष्वपि भावार्थककर्मशब्ददर्शनात् ॥ १३॥

शंसेदुक्थं सुदानव इत्यादौ शंसनस्य विधिः ॥ १४॥

इन्द्राय सामगायतेत्यादौ स्तुतस्य ॥ १५॥

मित्राय हव्यं घृतवज्जुहोतेत्यादौ होमस्य ॥ १६॥

न लिङ्लेट्तव्यान्यतमाप्रयोगाद्विधायकत्वमिति चेत् ॥ १७॥

लोटो विध्यर्थकत्वं शपथेन न निवार्यते ॥ १८॥

प्रथमपुरुषप्रयोगाभावान्नेति चेत् ॥ १९॥

स परोक्षविधयैष प्रत्यक्षविधयेत्येव विशेषः ॥ २०॥

ब्राह्मणेष्वपि सत्यं वदेत्यादयः प्रत्यक्षविधयो दृश्यन्ते ॥ २१॥

पूर्व आदेशः पर उपदेशः ॥ २२॥

तत्त्वानुशासनेष्वप्येतौ प्रकारौ दृश्येते ॥ २३॥

प्रज्ञानं ब्रह्मेत्यादेशस्तत्त्वमसीत्युपदेशः ॥ २४॥

देवताप्रकाशकत्वेन गतार्थत्वात्पुनर्विधातुमशक्तिरिति चेत् ॥ २५॥

अभिधानकर्मशब्दयोरन्योन्याविरुद्धा शक्तिः ॥ २६॥

वाक्यभेद इति चेत् ॥ २७॥

उद्देशमात्रतो देवताप्रकाशनं विधानतः क्रियाप्रतीतिरित्येकमेव वाक्यम् ॥ २८॥

प्रयोगसामर्थ्यात्प्रकाश्यस्य शेषोऽन्यन्मन्त्रपदजालमिति चेत् ॥ २९॥

न लैङ्गिकत्वाद्विनियोगस्य ॥ ३०॥

मन्त्रैरिष्टानि साधयितुं ब्राह्मणस्थकर्मकल्पाः पुरुषाणाम् ॥ ३१॥

न कर्मकल्पं पूरयितुं मन्त्राः ॥ ३२॥

सिद्धेषु मन्त्रेष्वनन्तरं हि कर्मकल्पाः प्रवृत्ताः ॥ ३३॥

मन्त्रेभ्योऽर्वाचीनत्वाद्ब्राह्मणानाम् ॥ ३४॥

मन्त्रव्याख्यानमन्त्रप्रमाणप्रदर्शनभाषा नवत्वादिभ्यस्तदवगतिः ॥ ३५॥

स्वार्थे स्वतन्त्रतया प्रवृत्तानामेव पवित्रतातिशयात्कर्मसु लिङ्गतः प्रयोगो मन्त्राणाम् ॥ ३६॥

ब्राह्मणश्रुत्यापीति चेत् ॥ ३७॥

सापि लैङ्गिकी ॥ ३८॥

ऐन्द्र्यागार्हपत्योपस्थानं विरुध्यत इति चेत् ॥ ३९॥

न प्रथममध्यमोत्तमज्योतिषां प्रतिनिधित्वात्त्रेतायाः ॥ ४०॥

एवं मन्त्राणां प्रामाण्यमार्षज्ञानानुवादित्वादेव न कर्माङ्गवस्तु-प्रकाशकत्वात् ॥ ४१॥

ब्राह्मणस्थकर्मविधीनां तु सत्यदेवतापवित्रमन्त्रावलम्बनत्वादेव न लिङ्लेट्तव्येभ्यः ॥ ४२॥

शब्दप्रमाणताहानेनानुमानप्रमाणतापत्तिरिति चेत् ॥ ४३॥

तदिष्टम् ॥ ४४॥

लौकिकवाक्यवदेव निगमवाक्यानां चार्थेषु गतिर्वाक्यस्वभावस्योभयत्र तुल्यत्वात् ॥ ४५॥

विनियोगकल्पनेष्वेव श्रुत्यादिपारदौर्बल्यं न प्रमेयावगताविति

प्रामाण्यचर्चायामुपेक्ष्यम् ॥ ४६ ॥

इन्द्रगार्हपत्ययोः पृथग्देवताङ्गीकारे वा कदाचनस्तरीमसीत्यैन्द्रीनाग्नेर्या स्यात् ॥ ४७ ॥

स्याद्वचनसामर्थ्यादिति चेत् ॥ ४८ ॥

ऐन्द्र्येत्यनुवादोऽनुपपन्नः ॥ ४९ ॥

तदादेः प्रमाथस्यैन्द्रे शस्त्रे विनियोगश्च ॥ ५० ॥

विनियोगविचारोऽन्यः प्रमेयविचारोऽन्यः ॥ ५१ ॥

पूर्वः क्रियोपकारकत्वविचार उत्तरोऽर्थविचारः ॥ ५२ ॥

पूर्वस्योत्तरोऽङ्गमिति चेत् ॥ ५३ ॥

स्वतन्त्र स्वसापेक्षस्य कथमङ्गं स्यात् ॥ ५४ ॥

प्रत्युतोपजीव्यो भवति ॥ ५५ ॥

पदाद्वाक्यैकदेशाद्वाक्याच्च प्रमेयलाभः ॥ ५६ ॥

वाक्यैकदेशवद्गुणवाक्यम् ॥ ५७ ॥

विरोधेऽभ्यस्तं मुख्यमन्यद्गौणम् ॥ ५८ ॥

साम्य उत्तरोत्तरप्राबल्यम् ॥ ५९॥

वाक्यप्रकरणविरोधाभावे पदानां रूढितोऽर्थाः ॥ ६०॥

विरोधे योगतः ॥ ६१॥

ऋषीणामनेकत्वेऽपि दर्शनानामार्षत्वाविशेषादेकग्रन्थवद्विचारः ॥ ६२॥

## तृतीयोऽध्यायः

### स्मृतिप्रामाण्यचर्चा

स्मृतयः प्रमाणं कर्तृसामान्याद्वेदानुमापकत्वात् ॥ १॥

वेदस्मृत्युक्तकर्मकर्तृसामान्यमिह कर्तृसामान्यम् ॥ २॥

न वा हेतोरपर्याप्तत्वात् ॥ ३॥

न हि नैसर्गिकोऽस्ति नियमो वैदिककतिपयकर्मकृतः सर्वं कर्म वैदिकमेवेति ॥ ४॥

वैदिककर्मपूरकं स्मृत्युक्तं कर्मैवात्र ग्राह्यमिति चेत् ॥ ५॥

श्रौतकल्पसूत्राण्येव स्मृतयः स्युः ॥ ६॥

वैदिकधर्मस्मृतिकर्तृसामान्यं कर्तृसामान्यमिति चेत् ॥ ७॥

अप्रमाणको हेतुः ॥ ८॥

स्मर्तृणां त्रैवर्णिकत्वात्तेषां वेदसंयोगोऽनुमीयत इति चेत् ॥ ९॥

वेदशब्दसंयोगोऽसमर्थः ॥ १०॥

अनर्थज्ञः कथमनुवदेत् ॥ ११॥

वेदशब्दग्रहणमात्रस्यैव त्रैवर्णिकाय स्मृतिविहितत्वात्स्मार्ताचारपरम्परा-प्राप्तत्वाच्च न ततोऽधिकमनुमातुं शक्यम् ॥ १२॥

शब्दग्रहणादनन्तरमर्थग्रहणमपि प्रयोजनायेति चेत् ॥ १३॥

न्यायमात्रमेतन्न स्मृतिभिर्विधीयते न च स्मार्तैराचर्यते ॥ १४॥

अर्थग्रहणस्याप्यभिलषितत्वे शब्दग्रहणसहकृतमेव तत्कुतो न स्याद्विद्यान्तरवत् ॥ १५॥

मन्त्राणामर्थोऽस्ति वा न वेति पूर्वतन्त्रे विचारश्च त्रैवर्णिकानां निरर्थवेदशब्दाध्ययनाचारं गमयेत् ॥ १६॥

हास्याचानुमानपरम्परास्मृतिकाराणां त्रैवर्णिकत्वात्सार्थवेदसंयोगोऽतः सार्थखिलवेदसंयोगोऽतस्तद्धर्मानुष्ठानमतस्तदनुवादिग्रन्थनिबन्धनम् इति ॥ १७॥

4 प्रतिकूलं चानुमातुं शक्यं सद्भावश्यकवैदिकधर्मनिबन्धनग्रन्थ-

विस्मरणासम्भवादवैदिक्ये धर्मस्मृतय इति ॥ १८ ॥

श्रौतधर्मेभ्योऽपि स्मार्तधर्माः सुतरां हि सङ्गसंयुक्ताः ॥ १९ ॥

स्मार्तेष्वपि केषाञ्चिच्छ्रौतत्वेन विभागो लिङ्गमन्येषामवैदिकत्वे ॥ २० ॥

अपि च स्मृतीनां ब्राह्मणानुमापकत्वे तद्धर्माणां स्वरूपायत्तं प्रामाण्यं ब्राह्मणो क्तकर्मवन्न वचनायत्तम् ॥ २१ ॥

युष्माकं मन्त्राणामविधायकत्वात्तदनुमापकत्वे न युक्तिः ॥ २२ ॥

स्मृतयः स्वतन्त्रं प्रमाणं मन्वादीनामृषीणां दर्शनत्वात् ॥ २३ ॥

न वा हेतोरनृतत्वात् ॥ २४ ॥

भृग्वत्रिकाव्यकश्यपदेवलनारदबृहस्पतियमप्रजापतिवसिष्ठपराशराणां प्रत्यक्षवैदिकमन्त्रकृतां कृतयो दृश्यमानाः स्मृतयः काश्चिदित्यश्रद्धेयं महतो भाषाभेदात् ॥ २५ ॥

अङ्गिरोदक्षसंवर्तादीनां भृग्वादिवत्प्राचां कृतयो दृश्यमाना अर्वाचीन-भाषासंयुक्ताः काश्चित्स्मृतय इत्येतदप्यनेन व्याख्यातम् ॥ २६ ॥

याज्ञवल्क्यश्चेत्स्मृतिकारस्तत्रार्वाचोः कात्यायनापस्तम्बयोर्नामोल्लेखो न स्यात् ॥ २७ ॥

# विश्वमीमांसा (५)

## प्रथमोऽध्यायः

### प्रथमः पादः

अथातो विश्वमीमांसा ॥ १ ॥

प्राणो विश्वस्यादिः ॥ २ ॥

अभौतिकः ॥ ३ ॥

आनीदवातं स्वधया तदेकमिति निगमोऽत्र भवति ॥ ४ ॥

सद्ब्रह्म परादेवता पराशक्तिरिति तस्यान्यानि मुख्यानि नामानि ॥ ५ ॥

स्वधा स्वभावः ॥ ६ ॥

अनादिरनन्ता विभुः स्वानुभूत्येकरसा चित् प्राणः ॥ ७ ॥

गूढेन स्वभावेन गूढमिमं तमसा गूढं तम आह परोक्षया वाचा ॥ ८ ॥

तपसा स विकासं प्राप्तः ॥ ९ ॥

सहजस्वानुभूतिनिष्ठाजन्यात्पाकविशेषात्तमो नातिरिच्यते ॥ १० ॥

सर्गोन्मुखत्वं विकासः ॥ ११ ॥

तत्र सत्यमृतं च निष्पन्ने ॥ १२ ॥

ऋतं च सत्यं चाभीद्धात्तपसोऽध्यजायतेति निगमोऽत्र भवति ॥ १३ ॥

सत्यं ज्ञातृ ॥ १४ ॥

ऋतं ज्ञानम् ॥ १५ ॥

ज्ञातृज्ञानाभ्यामन्यत्वे प्राणश्चिन्न स्यात् ॥ १६ ॥

तयोरन्यतरच्छेदाविर्भावः कथमात्मन आत्मतः ॥ १७ ॥

तस्य द्वेधा विभाग एव नोत्पत्तिरित्यविरोधः ॥ १८ ॥

अमूर्तस्य विभागानुपपत्तिरिति चेत् ॥ १९ ॥

धर्मत्वधर्मित्वाभ्यां न च्छेदादित्यदोषः ॥ २० ॥

अहङ्कर्तृत्वमत्र धर्मित्वम् ॥ २१ ॥

अहङ्कारान्ममकारः ॥ २२ ॥

ममकारादहङ्कर्तुर्ज्ञातुर्ज्ञानं धर्मो भवति ॥ २३ ॥

यत्रान्तरनिष्पत्तिस्तत्राहङ्कारोदयः ॥ २४ ॥

शेषे तस्य ममकारः ॥ २५ ॥

महतो महीयान्प्राणो वस्तुतः ॥ २६ ॥

अणोरणीयानन्तरदृष्ट्या ॥ २७ ॥

अन्तरमात्मा चेत्तस्यानुदयः ॥ २८ ॥

अन्यश्चेन्न जानाति ॥ २९ ॥

आत्मा मूलस्वरूपं चेत्प्राणान्नातिरिच्यते ॥ ३० ॥

अहङ्कर्ता चेदुदयव्यवहारे न दोषप्रसक्तिरहङ्कारस्यादिमत्त्वात् ॥ ३१ ॥

विशेषणोदयो विशेष्योदय उपचर्यते ॥ ३२ ॥

अहङ्कर्तृत्वस्यैवोदयो न चिदंशस्येत्युक्तं भवति ॥ ३३ ॥

अहङ्कारोदयादेव हि विभागः ॥ ३४ ॥

अन्तरस्य नियतो भागश्चेत्प्राणस्य विलक्षणावंशौ प्रसज्येयाताम् ॥ ३५ ॥

अन्यथा कुतो न सर्वत्राहङ्कारः ॥ ३६॥

प्रदेशनियमो नास्ति तथाप्येकत्रैव तदुदयनियमः समष्टौ व्यष्टौ चेत्यदोषः ॥ ३७॥

परां देवतां देवमातरमदितिमाहुः ॥ ३८॥

समष्टावहङ्कर्ता महेन्द्रः ॥ ३९॥

अदितिः प्राणो महेन्द्रः सत्यं माहेन्द्रं ज्ञानमृतमित्युक्तं भवति ॥ ४०॥

ऋतं विराण्महेन्द्रस्य पत्नी कथ्यते परोक्षया वाचा ॥ ४१॥

**द्वितीयः पादः**

ज्ञातुः पृथग्भावे ज्ञानं पराशक्तिरुत्सर्गात् ॥ १॥

एतेन महेन्द्रस्य शक्रत्वं व्याख्यातम् ॥ २॥

शक्रशक्तावेकार्थौ शब्दौ ॥ ३॥

ज्ञानं बुद्धिश्चेद्गुणत्वप्रसङ्गः ॥ ४॥

अन्यच्चेन्नोपलब्धिः ॥ ५॥

द्रव्यांश एव न द्रव्याश्रयमिति न गुणः ॥ ६॥

चितोंशत उत्पत्तिविनाशप्रसक्तिरिति चेत् ॥ ७ ॥

ज्ञानस्य ज्ञेयाकृतिधारितोत्पत्तिरुपचर्यते ॥ ८ ॥

तद्द्वेषविसर्जनं विनाशः ॥ ९ ॥

ज्ञेयबहुत्वेन ज्ञानबहुत्वोपचारः ॥ १० ॥

तस्मान्न बुद्धेर्ज्ञानमर्थान्तरम् ॥ ११ ॥

विषयस्य बुद्ध्या ग्रहणमुपलब्धिरुच्यते ॥ १२ ॥

ज्ञानस्य कोशत्वप्रसङ्ग इति चेत् ॥ १३ ॥

तस्य बाहुल्यात्तद्वादः ॥ १४ ॥

कथमन्यत्र तद्बाहुल्यम् ॥ १५ ॥

सर्वव्यापकत्वात् ॥ १६ ॥

एतेन प्राणस्य कोशत्वं च व्याख्यातम् ॥ १७ ॥

बुद्धिप्राणौ भिन्नौ चेत्प्रतिज्ञाहानिः ॥ १८ ॥

प्रत्यक्षविरोधान्नाभेदः ॥ १९ ॥

यत्र चितिवेदनामात्रं स प्राणः ॥ २०॥

यत्र वेद्यविवेकः सा बुद्धिः ॥ २१॥

महेन्द्रस्य समाधौ चित्प्राणाकृतिः ॥ २२॥

लोकानुभवेषु बुद्ध्याकृतिः ॥ २३॥

दशाभेदाद् द्वैविध्यं न स्वरूपभेदात् ॥ २४॥

जीवानामस्माद्दशां विज्ञाने मनसि च कोशयोश्चक्षुषि श्रोत्रे चेन्द्रिययोश्चिद् बुध्याकृतिः ॥ २५॥

शेषकोशेन्द्रियत्रययोः समाधौ च प्राणाकृतिः ॥ २६॥

आनन्दमये निद्रा ॥ २७॥

प्राणमय औदासीन्यम् ॥ २८॥

वृक्षादौ सर्वदा प्राणाकृतिः ॥ २९॥

एवं व्यष्टिषु तस्या उपाधिभेदाद् द्वैविध्यं न स्वरूपभेदात् ॥ ३०॥

न केवलं सर्वव्यापिनी सर्वस्योपादानं च चित् ॥ ३१॥

दृश्यं चितोऽन्यच्चेन्न चिद्विश्वस्य मूलम् ॥ ३२॥

अनन्यच्चेन्न दृष्टिदृश्यभेदः ॥ ३३ ॥

दृश्यानां च चित आदिबीजत्वात्परम्परयाऽनन्यत्वमित्यविरोधः ॥ ३४ ॥

अत एव प्रज्ञाविषयतादात्म्योपपत्तिः ॥ ३५ ॥

असजातीययोर्हि न तादात्म्यम् ॥ ३६ ॥

यद्ग्रहणे स्मरणे च प्रज्ञा विषयाकारा तत्तयोस्तादात्म्यम् ॥ ३७ ॥

सान्निध्याद्विषयो ज्ञाने प्रतिबिम्बितः स्यान्न ज्ञानं विषयाकारं भवेदिति चेत् ॥ ३८ ॥

असान्निध्ये विषयस्मरणानुपपत्तिः ॥ ३९ ॥

स्वप्नमाययोरितोऽपि स्पष्टोऽयमर्थः ॥ ४० ॥

तस्माद्वैज्ञानिकः सर्गः ॥ ४१ ॥

चितः सूक्ष्मबीजान्यादिमानि तेभ्यो व्यक्तम् ॥ ४२ ॥

तस्मान्नबीजकार्ययोरितरेतराश्रयत्वम् ॥ ४३ ॥

स्थूलबीजकार्येष्वपि चितश्च समवायित्वम् ॥ ४४ ॥

रेतसि वृक्षबीजे वा प्राण एवाभिव्यक्तो बीजाणून्वर्धयन्नाकारं जनयित्वा

तत्र समवेतश्च हि भवेत् ॥ ४५॥

एवं चितो विश्वस्य निमित्तत्वं प्रकृतित्वं च ॥ ४६॥

प्राणं विना केवलैरणुभिर्न जरायुजाण्डजस्वेदजोद्भिज्जजन्म ॥ ४७॥

घटादेर्जन्मास्तीति चेत् ॥ ४८॥

स जीवस्य सर्गस्तत्रसाक्षाच्चितो निमित्तत्वं परम्परयोपादानत्वम् ॥ ४९॥

एवं चिच्छक्तिरेका सर्वं जगत् ॥ ५०॥

अदितिर्द्यौरदितिरन्तरिक्षमदितिर्माता स पिता स पुत्रः विश्वेदेवा अदितिः पञ्चजना अदितिर्जातमदितिर्जनित्वमिति निगमोऽत्र भवति ॥ ५१॥

**तृतीयः पादः**

सर्गस्यानादित्वादचितोऽप्यनादित्वम् ॥ १॥

प्रलये सूक्ष्मायास्तस्या ईश्वरे गूढत्वम् ॥ २॥

सर्गे विकासाश्चित्राः ॥ ३॥

अचिता जीवाः सर्वे व्याख्याताः ॥ ४॥

कर्मजन्मनोरितरेतराश्रयत्वमिति चेत् ॥ ५॥

बीजवृक्षवदुपपत्तिः ॥ ६ ॥

दृष्टान्तस्तु दुर्बलः सूर्यकिरणाः प्रथमानि बीजानि वृक्षेष्वनन्तराणीति ॥ ७ ॥

तेषामपि बीजसंस्कारादेव बीजत्वमिति चेत् ॥ ८ ॥

बीजरससंस्कारासम्भवो नादिवृक्षोत्पत्तौ पृथिव्याम् ॥ ९ ॥

एतेन प्रथममनुष्यस्य मनुष्यबीजानपेक्षत्वं व्याख्यातम् ॥ १० ॥

सर्वप्राण्यसमन्वयाच्च कर्मसिद्धान्तो दुर्बलः ॥ ११ ॥

अचितोऽण्वात्मना ब्रह्मणि गूढत्वे सर्वेषां ब्रह्माण्डानामेकदा भस्मीभावप्रसक्तिः ॥ १२ ॥

तादृशो घोरो निसर्ग ईश्वरस्य कल्पयितव्यः ॥ १३ ॥

स्मृत्यात्मना गूढत्वे सर्गस्य वैज्ञानिकत्वप्रसङ्गः ॥ १४ ॥

दृष्टिरेव सृष्टिरित्येके ॥ १५ ॥

अस्माकं चेत्प्रत्यक्षविरोधः ॥ १६ ॥

ब्रह्मणश्चेदिष्टं यथा निरूपितम् ॥ १७ ॥

चितिरेव हि दृष्टिर्व्यवह्रियते शास्त्रेषु ॥ १८ ॥

ब्रह्मा महेन्द्रान्नातिरिच्यते ॥ १९ ॥

एष ब्रह्मा य ऋत्विय इन्द्रो नाम श्रुतो गृण इति निगमोऽत्र भवति ॥ २० ॥

प्राणश्चेत्सृजति पुरुषसृष्टिवचनविरोधः ॥ २१ ॥

पुरुषश्चेत्तस्यैवानादिवस्तुत्वम् ॥ २२ ॥

वस्तुतः पुरुषस्य प्राणादनन्यत्वात्तदुपादानत्ववचनानां प्राणपरत्वे-नान्वयः॥ २३ ॥

साक्षाच्च निमित्तत्ववचनानाम् ॥ २४ ॥

विश्वगतेरभिवृद्धेर्लक्ष्यत्वात् ॥ २५ ॥

कामपूर्वकत्वे सर्वप्रणाशनस्याकाम्यत्वात् ॥ २६ ॥

नैसर्गिकत्वे सर्वप्रणाशस्यासम्भवाच्च न विश्वनाश इति वासिष्ठः ॥ २७ ॥

गोलानामेकदैवानुत्पत्तेः ॥ २८ ॥

एकदैवान्तासम्भवात् ॥ २९ ॥

एकप्रणाशेऽन्यस्योत्पत्तिसम्भवात् ॥ ३० ॥

महाभूतानां पूर्णविनाशकारणादर्शनाच्च सर्वप्रणाशस्यासम्भवः ॥ ३१ ॥

गोलनाशे तदभिवृद्धिनिरोध इति चेत् ॥ ३२॥

रूपान्तरेण परिणामो नाशो न भस्मीभावः ॥ ३३॥

पूर्वकल्पाङ्गीकारे प्रलयाङ्गीकारः ॥ ३४॥

अन्यथा धाता यथापूर्वमकल्पयदिति निगमविरोधः ॥ ३५॥

पूर्वब्रह्माण्डकल्पनमेव पूर्वकल्प इत्यविरोधोऽस्मद्ब्रह्माण्डसर्गपरत्वात्तद्वचनस्य ॥ ३६॥

एकैकः सूर्यकुटुम्ब एकैकं ब्रह्माण्डमुच्यते ॥ ३७॥

सर्गस्य सादित्वापत्तिरिति चेत् ॥ ३८॥

प्रकृतिरेवानादिः प्रतिज्ञायत इत्यविरोधः ॥ ३९॥

अनादिमौनस्य भङ्गो नोपपद्यत इति चेत् ॥ ४०॥

प्रागभावस्येवोपपद्यते ॥ ४१॥

तवापि जीवानां मुक्तावनादिकर्मबन्धस्य भङ्ग एवमेव समाधेयः ॥ ४२॥

तत्र विद्याकारणमस्तीति चेत् ॥ ४३॥

अत्र तपसः पाकोऽस्ति कारणम् ॥ ४४॥

एवमभीद्धात्तपस इति वचनमर्थवत्स्यात् ॥ ४५॥

**चतुर्थः पादः**

ततो रात्रिरजायतेत्याह ॥ १॥

विराण्महेन्द्रयोर्दम्पत्योः कालो जात इति पश्यन् ॥ २॥

सूर्योत्पत्तेः प्राक् कालस्य रात्रिशब्देनाभिधानं परोक्षया वाचा ॥ ३॥

काल एवस्त्र्याख्यया काली ॥ ४॥

एतेन काल्यास्तन्त्रप्रसिद्धं रात्रि नाम व्याख्यातम् ॥ ५॥

सूक्ष्मतमः शब्दः कालस्य स्वरूपम् ॥ ६॥

ज्ञानधारायां सुतरां सूक्ष्मः शब्दो जायत इति ततः कालोद्भवोपपत्तिः ॥ ७॥

स एव प्रणवः ॥ ८॥

प्रणव एव रुद्रो रोदितीति व्युत्पत्तेः ॥ ९॥

एतेन रुद्रस्य महाकालत्वं व्याख्यातम् ॥ १०॥

कालीरुद्रावभिन्नौ प्रसज्ज्येयातामिति चेत् ॥ ११॥

कार्यभेदात्तद्भेदोपचारो न स्वरूपतो भेद इत्यदोषः ॥ १२॥

गभीरं पचनं सूक्ष्मतमं स्वरणं चेति कालस्य द्वे कर्मणी ॥ १३॥

पचने काली ॥ १४॥

स्वरणे रुद्रः ॥ १५॥

मूलाक्षरमेव प्रणवो नोङ्कारः ॥ १६॥

अनेन तस्यानुकरणमर्वाचामृषीणाम् ॥ १७॥

ईङ्कारेण प्राचाम् ॥ १८॥

आदौ विषयानागमान्न ज्ञानधारालाभ इति चेत् ॥ १९॥

ज्ञातुः सर्गविषयकालो च नोपपत्तेस्तल्लाभः ॥ २०॥

न केवलं दृश्यस्य भावितस्यापि हि विषयत्वम् ॥ २१॥

उद्भवात्प्राक् कालो नास्ति चेदसत्कार्यप्रसङ्गः ॥ २२॥

चितः सर्वप्रकृतित्वप्रतिज्ञाहानिश्च ॥ २३॥

अस्ति चेत् किं रूपोऽयं तदा ॥ २४॥

अस्ति गूढस्तदा स्वानुभूतिधारायां तपोरूपः ॥ २५॥

ततः समुद्रो अर्णव इत्याह ॥ २६॥

द्यौरत्रार्णवः समुद्रः परोक्षया वाचा ॥ २७॥

सूक्ष्मतमं तेजो दिवः स्वरूपम् ॥ २८॥

सूक्ष्मतमशब्दसङ्घर्षणात्सूक्ष्मतमं तेजो जायत इत्यालोचनेष्वनुभवः ॥ २९॥

सा व्यक्तस्याधारो देशः ॥ ३०॥

एषैव गूढा विद्युदखिलव्यक्तधारिणी ॥ ३१॥

अस्ति प्रादुर्भावात्प्राक् स्वानुभवे गूढा भानरूपा ॥ ३२॥

ज्ञातुः शब्दानुसन्धानात्तदाविर्भावः ॥ ३३॥

अदितिद्यौरेकेषां भाषायाम् ॥ ३४॥

तेषामेषा दक्षस्य दुहिता ॥ ३५॥

दक्षः कालः ॥ ३६॥

सोऽदितेः पुत्रो येषां चिददितिः ॥ ३७॥

कालस्य माता चिद्विराडिति चेत् ॥ ३८ ॥

उक्तस्तात्त्विको विराडदित्योरभेदः ॥ ३९ ॥

अदितेर्दक्षो अजायत दक्षाद्वदितिः परीति निगमोऽत्र भवति ॥ ४० ॥

एतावान्परमण्डलभावसङ्ग्रहः ॥ ४१ ॥

प्राणो ज्ञाता ज्ञानं कालो द्यौरिति ॥ ४२ ॥

ज्ञातुरन्याश्चतस्रः शक्तयस्तस्याहङ्कर्तृत्वान्ममकारवत्त्वाच्च ॥ ४३ ॥

चत्वारि ते असुर्याणि नामा दाभ्यस्य महिषस्य सन्ति त्वमङ्ग तानि विश्वानि वित्सेयेभिः कर्माणि मघवञ्चकर्थेति निगमोऽत्र भवति ॥ ४४ ॥

असुर्यं नाम शक्तिः ॥ ४५ ॥

सामर्थ्यवद्द्रव्यमेव शक्तिर्न सामर्थ्यमात्रम् ॥ ४६ ॥

महत्तन्नाम गुह्यं पुरुस्पृग्येन भूतं जनयो येन भव्यमिति प्राणस्योक्तिः ॥ ४७ ॥

आकाशस्येत्येके ॥ ४८ ॥

न तस्यादिकारणत्वाभावात् ॥ ४९ ॥

5 तटस्थत्वाच्च सर्वव्यक्तजनने ॥ ५० ॥

यदुष औच्छः प्रथमा विभा नामजनयो येन पुष्टस्य पुष्टम् यत्तेजामि त्वमवरं परस्या महन्महत्या असुरत्वमेकमिति बुद्धेः ॥ ५१॥

उषस एव स्तुतिरियमित्येके ॥ ५२॥

नैन्द्रत्वात्सूक्तस्य ॥ ५३॥

असुरत्वमेकमिति प्रकान्तस्मारणाच्च ॥ ५४॥

स्त्रीलिङ्गान्नेति चेत् ॥ ५५॥

तत्र लिङ्गभेदाभावादनाक्षेपः ॥ ५६॥

विश्वदिनादित्वादुष इति रूपकातिशयेन सम्बोधनम् ॥ ५७॥

युक्तं बुद्धिं यत्प्रथमां विभामाह ॥ ५८॥

सैव हि भान्तीनां प्रथमा ॥ ५९॥

तयैव हि सर्वं भाति ॥ ६०॥

पुष्टस्य प्राणस्य विविधसर्गसाहाय्यकात्पुष्टं भूयो जनयतीति द्वितीयेन पादेनाह ॥ ६१॥

यत्तेजामि त्वमवरं परस्या इति परमण्डलजुषो दृश्यलोकावतरणम् उच्यते ॥ ६२॥

विधुं दद्राणं समने बहूनां युवानं सन्तं पलितो जगारेति कालस्य ॥ ६३॥

दूरे तन्नाम गुह्यं पराचैर्यत्त्वाभीते अह्वयेतां वयोधै उदस्तभ्नाः पृथिवीं द्यामभीके भ्रातुः पुत्रान्मघवन्ति त्विषाण इति दिवः ॥ ६४॥

उत्तम्भितो द्यौरत्र सूर्यः ॥ ६५॥

ऋगेषा विद्युत इत्येके ॥ ६६॥

दिव एव गूढविद्युत्त्वात्तन्नान्यन्मतम् ॥ ६७॥

ता एताश्चतस्रो न केवलं परमण्डले दृश्ये चात्र विभुत्वात् ॥ ६८॥

इति प्रथमोऽध्यायः

# विश्वमीमांसा (६)

## प्रथमोऽध्यायः

अथातो विश्वमीमांसा ॥ १॥

अक्लिष्टार्थैः स्पष्टप्रमाणोदाहरणैः सूत्रैः ॥ २॥

तत्रादावक्षरविचारः ॥ ३॥

केचिदाहुरक्षरात्मकः शब्दश्चानित्यः ॥ ४॥

तत्र प्रथमः शब्दः कण्ठताल्वाद्यभिघातजः ॥ ५॥

ततः सर्वासु दिक्षु तत्सजातीयशब्दसन्तानोत्पत्तिः ॥ ६॥

स्वस्वश्रोत्रोत्पन्नो गृह्यते यावति न तत्तरङ्गोपशमः ॥ ७॥

पूर्वपूर्व उत्तरोत्तरेण हन्यते ॥ ८॥

प्रतिघातिद्रव्यसंयोगाच्चरमस्य नाशः ॥ ९॥

क्षीणबलस्योपान्त्यवधसङ्घर्षणे सुन्दोपसुन्दन्यायेन वा ॥ १० ॥

सर्वोऽप्याकाशसमवेतो गुणः ॥ ११ ॥

आकाशोऽस्य समवायिकारणमिति ॥ १२ ॥

कथं नित्यस्य विभोर्मितदेशवृत्तिरुत्पत्तिविनाशवान् गुणः ॥ १३ ॥

बुद्धिवदिति चेत् ॥ १४ ॥

असर्वसम्मतत्वाददृष्टान्तः ॥ १५ ॥

कथं गुणः ॥ १६ ॥

जातिमत्त्वे सत्यकर्मत्वादद्रव्यत्वाच्चेति चेत् ॥ १७ ॥

कथमकर्मत्वम् ॥ १८ ॥

अचाक्षुषत्वादिति चेत् ॥ १९ ॥

वायुगमनस्याचाक्षुषत्वान्न कर्मणां चाक्षुषत्वनियमः ॥ २० ॥

चक्षुरितरेन्द्रियग्राह्यत्वादिति चेत् ॥ २१ ॥

कम्पस्य त्वगिन्द्रियग्राह्यत्वान्न सोऽपि नियमः ॥ २२ ॥

चक्षुरितरेन्द्रियमात्रग्राह्यत्वादिति चेत् ॥ २३॥

अन्धो निमीलिताक्षो वा तन्मात्रेणैव गृह्णातीति नेयं युक्तिः ॥ २४॥

शरीरावरणमात्रं त्वगिन्द्रियमिति न सङ्कोचः ॥ २५॥

अनावरणेऽपि क्षतादौ स्पर्शज्ञानात् ॥ २६॥

कथमद्रव्यत्वम् ॥ २७॥

एकद्रव्यसमवायिकारणकत्वादिति चेत् ॥ २८॥

किं तदेकं द्रव्यम् ॥ २९॥

आकाशः ॥ ३०॥

आकाशसमवायिकारणकत्वं कथम् ॥ ३१॥

आकाशगुणत्वात् ॥ ३२॥

तदसिद्धेर्न स हेतुः ॥ ३३॥

प्रागद्रव्यत्वसिद्धेर्न हि गुणत्वसिद्धिः ॥ ३४॥

प्राग्गुणत्वसिद्धेश्च नाकाशगुणत्वसिद्धिः ॥ ३५॥

इन्द्रियार्थत्वाददद्रव्यत्वमिति चेत् ॥ ३६॥

शब्दो वा शब्दाश्रितो नादोवेन्द्रियार्थ इति संशयादसिद्धो हेतुः ॥ ३७॥

तीव्रमन्दत्वादिना मधुरपरुषत्वादिना च नादस्यैव विशेषितत्वाद् अक्षरस्याविशेषितत्वाद्भेदप्रत्ययः ॥ ३८॥

शब्दपदस्य तुल्यं नादाक्षरवाचकत्वादेकार्थबुद्धिः ॥ ३९॥

अव्यवहारेऽपि वर्णे तीव्रत्वादि वा व्यवहारसङ्करेऽपि शब्दस्य द्वावर्थौ वेति संशयादिन्द्रियार्थः क इति संशयः ॥ ४०॥

मृदङ्गादिशब्दसजातीयत्वादक्षरं नाद विशेष इति चेत् ॥ ४१॥

अक्षरसजातीयत्वान्मृदङ्गादिशब्दो नादवान् ॥ ४२॥

अक्षराणां कण्ठताल्वाद्यभिघातजत्वे मूकादपि तदुत्पत्तिप्रसङ्गस्तादृशाभिघातस्यातदसाध्यत्वात् ॥ ४३॥

अतो वागिन्द्रियमङ्गीकर्तव्यम् ॥ ४४॥

आगमप्रामाण्याच्च ॥ ४५॥

शब्दवागिन्द्रिययोर्जन्यजनकभावं यथावदनुरूप्य शब्दतत्त्वकथनम् अपूर्णम्॥ ४६॥

श्रोत्राकाशस्यैव ग्रहीतृत्वे मूकोऽपि ग्रहीता स्याच्छ्रोत्रेऽप्याकाशस्य सत्त्वात् ॥ ४७॥

अतः श्रोत्राकाशाच्छ्रोत्रेन्द्रियमन्यदङ्गीकर्तव्यम् ॥ ४८॥

शब्दश्रोत्रेन्द्रिययोर्ग्राह्यग्रहीतृभावं यथावदनिरूप्य शब्दतत्त्वकथनम् अपूर्णम् ॥ ४९॥

शब्दाच्छब्दसन्तानोत्पत्तौ गुणत्ववादिनोत्तरोत्तरस्योत्तरोत्तरदेशभवत्वे हेतुर्वाच्यः ॥ ५०॥

तरङ्गवदिति चेत् ॥ ५१॥

शब्दस्य चलनक्रियाङ्गीकर्तव्या ॥ ५२॥

तेन गुणस्य क्रियावत्त्वप्रसङ्गः ॥ ५३॥

कदम्बकोरकवदिति चेत् ॥ ५४॥

शब्दस्य परिणामवत्त्वमङ्गीकर्तव्यम् ॥ ५५॥

तेन गुणस्य गुणवत्त्वप्रसङ्गः ॥ ५६॥

शब्दस्य प्रतिघातिद्रव्यसंयोगान्नाशवर्णने चेयमापत्तिः संयोगो हि वो गुणः ॥ ५७॥

तत्र संयोगो भाक्त इति चेत् ॥ ५८॥

शब्दग्राहकधातुफलके शब्दसंयोगो दृश्यते ॥ ५९॥

अयमेकोऽलं शब्दस्य गुणत्वं प्रतिषेद्धुं यथोत्तरत्र निरूपयिष्यमः ॥ ६०॥

अन्ये प्राहुः शब्दो नित्यः ॥ ६१॥

विभुश्च ॥ ६२॥

संयोगविभागैरभिव्यज्यते ॥ ६३॥

अभिव्यक्तस्य व्यापकत्वात्सर्वत्र श्रुतिप्रसङ्ग इति चेत् ॥ ६४॥

यावत्यभिव्यञ्जकानां गतिस्तावत्येव प्रदेशेऽभिव्यक्तेरविरोधः ॥ ६५॥

संयोगविभागानामुच्चारकमुख एवोपरतत्वान्न गतिरिति चेत् ॥ ६६॥

अन्ये ते ॥ ६७॥

उच्चारणाभिघातप्रेरितो वायुः स्तिमितानि वाय्वन्तराणि प्रतिबाधमानः सर्वतो दिक्कांत्संयोगविभागानुत्पादयति ॥ ६८॥

वायोरप्रत्यक्षत्वादप्रत्यक्षास्ते ॥ ६९॥

अभिप्रतिष्ठन्ते यावद्वेगमिति ॥ ७०॥

इमे च वागिन्द्रियमुपेक्षां चक्रिरे ॥ ७१॥

संयोगविभागानामावरणापनोदनेनाभिव्यञ्जकत्वमात्रं चेदुच्चारकविशेषकृतस्वरविशेषानुभवानुपपत्तिः ॥ ७२॥

स्वनिमित्तगुणाधायकत्वमपीति चेद्वर्णेभ्यो ध्वनिरन्योऽङ्गीकर्तव्यः ॥ ७३॥

तस्य संयोगविभागनेयत्वं चाङ्गीकर्तव्यम् ॥ ७४॥

वर्णाद् ध्वनेरन्यत्वे तयोरस्पर्शत्वान्न संयोगः ॥ ७५॥

अगुणिगुणत्वान्न समवायः ॥ ७६॥

गुणिगुणत्वाभ्युपगमे ध्वनेर्निमित्तगुणत्वानुपपत्तिः ॥ ७७॥

निमित्तविशेषवशाद्वर्णगुणविशेष इति चेत् ॥ ७८॥

स किमाश्रयद्रव्येण सहाभिव्यज्यते ॥ ७९॥

आहोस्विदाश्रयद्रव्ये जायते ॥ ८०॥

अभिव्यक्तौ विशेषानुपपत्तिः ॥ ८१॥

उत्पत्तौ न मुखादन्यत्र तदुपलब्धिर्विशेषाधायकनिमित्तस्य तत्रैव सत्त्वात् ॥ ८२॥

उत्पन्नस्य संयोगविभागनेयत्वे तद्वत्तस्याभिप्रस्थानमापद्येत ॥ ८३ ॥

तस्य गुणत्वादाश्रयद्रव्यगतिं विना न गतिः ॥ ८४ ॥

शब्दाभिव्यक्तावेकस्याभिव्यक्तौ सर्वेषामभिव्यक्तिः प्रसज्येताक्षराणां समानदेशत्वात् ॥ ८५ ॥

अभिव्यक्त्यनुपपत्तिश्चावरणासिद्धेः ॥ ८६ ॥

नित्यस्य नित्यमनुपलब्धेः किमप्यनुमीयत इति चेत् ॥ ८७ ॥

तस्यानुपलब्धितः किमपि तस्यापि किमपीत्यनवस्था ॥ ८८ ॥

नित्यत्वमेवादौ न सिद्धं यदवलम्बनेयमावरणानुमितिः ॥ ८९ ॥

त्रैकालिकार्थबोधकत्वात्तदनुमीयत इति चेत् ॥ ९० ॥

अक्षराणि प्रकृतानि पदानि पक्षीक्रियन्ते ॥ ९१ ॥

अक्षराण्येव पदानीति चेत् ॥ ९२ ॥

घटपदे द्वावकारौ प्रसज्येयाताम् ॥ ९३ ॥

द्विरभिव्यक्तिरेव न द्वौ वर्णाविति चेत् ॥ ९४ ॥

वर्णाभिव्यक्तिक्रमस्यैवार्थबोधकत्वं न वर्णानाम् ॥ ९५ ॥

पूर्ववर्णजनितसंस्कारसहितोऽन्त्योवर्णोऽर्थबोधक इति चेत् ॥ ९६॥

अभिव्यक्तेरेव पौर्वापर्यं न विभूनां वर्णानाम् ॥ ९७॥

अभिव्यक्तेः प्रागभिव्यक्तौ चैकरूपाणामभिव्यक्तिपौर्वापर्येण न कश्चित्प्रकृतिपरिणामः ॥ ९८॥

श्रोतृबुद्धौ चेत्संस्कार तस्या एव संस्कारसहितत्वं नान्त्यवर्णस्य ॥ ९९॥

तत्र तस्य प्राधान्यमिति चेत् ॥ १००॥

तत्रापि क्रमस्यैव प्राधान्यं दृश्यते न कस्यचिदेकस्य वर्णस्य ॥ १०१॥

रसः सर इति पदयोस्तुल्यार्थत्वं चापद्येत विसर्गस्योभयत्र पूर्ववर्णजनित-संस्कारस्य तुल्यत्वात् ॥ १०२॥

संस्कारक्रमो भेदक इति चेत् ॥ १०३॥

क्रमस्य बोधकत्वं पुनरापन्नम् ॥ १०४॥

सङ्केततश्च त्रैकालिकार्थबोधकत्वसिद्धेरनैकान्तिको हेतुः ॥ १०५॥

सजात्याच्च सङ्केतग्रहो नानुपपन्नः ॥ १०६॥

सिद्धान्तः

स्फोटः शब्दो ध्वनिः शब्दगुण इति भगवान् पतञ्जलिः ॥ १०७॥

शब्दोऽत्र वर्णात्मकः प्रकरणात् ॥ १०८ ॥

व्यञ्जकत्वे नोपकारकत्वं गुणत्वमित्येके व्याचक्षते ॥ १०९ ॥

तत्र प्रसिद्धार्थत्यागोऽप्रसिद्धार्थकल्पनं च ॥ ११० ॥

ध्वनिगुणकं द्रव्यं शब्दस्तस्य स्फोटनामधेयं चेत्युक्तं भवति ॥ १११ ॥

पूर्वतन्त्रकारोऽपि शब्दं ध्वनिगुणकं द्रव्यमेव मन्यते ॥ ११२ ॥

यदयं पूर्वपक्षोक्तां शब्दवृद्धिं नादवृद्धिः परेति परिहरति ॥ ११३ ॥

निरन्तरं क्रियमाणाः संयोगविभागा एव नाद इति चेत् ॥ ११४ ॥

प्रसिद्धार्थपरित्यागोऽप्रसिद्धार्थकल्पनं च ॥ ११५ ॥

# विश्वमीमांसा (७)

## प्रथमोऽध्यायः

### प्रथमः पादः

अथातो विश्वमीमांसा ॥ १ ॥

विश्वमिदं चिल्लक्षणं  सदेकम् ॥ २ ॥

सतो विभूतय इतरे भावाः ॥ ३ ॥

स्वर्णस्येव भूषाः ॥ ४ ॥

न रज्जाविव सर्पस्तत्रारोपितं रूपम् ॥ ५ ॥

परिणामो न दृष्टिभ्रमः सिद्धत्वात् ॥ ६ ॥

शास्त्रवत्त्वात् ॥ ७ ॥

दिव्यदृष्टौ च दर्शनात् ॥ ८ ॥

एकस्मिन्मुक्तेऽप्यन्येन दृष्टत्वाच्च ॥ ९ ॥

सर्वेषां भावानामभेदस्तात्त्विकः ॥१०॥

भेदः पारिणामिकः ॥११॥

नाणवः प्रधानं वेदं प्राक् सर्गात् ॥१२॥

सत्यविभक्तमनाकारमस्मासु स्मृतिबीजवत् ॥१३॥

ग्रहणस्मृत्योः प्रज्ञाविषयाकृतिः ॥१४॥

विषयाः समष्टिचिद्विभूतिर्न चेद्विषयव्यष्टिचित्तादात्म्यानुपपत्तिः ॥१५॥

स्वप्ने व्यष्टिधीरिव समष्टिधीर्जाग्रति भुवनम् ॥१६॥

तद्वदेव धियः परिणामादहानिः ॥१७॥

सर्गस्य शास्त्रवत्त्वात्परिणामः क्रमात् ॥१८॥

यथा जीवस्मृतिस्वप्ने ॥१९॥

सत्येकस्मिन्नन्तरावर्तकोटिभिर्ज्ञातृकोटयः ॥२०॥

ज्ञाता व्यवहारे शक्तिमान् ॥२१॥

ज्ञानं शक्तिः ॥२२॥

अणोरणीयान्पूर्वः ॥२३॥

महतोमहीयस्युत्तरा ॥ २४॥

एतेनात्मन उभयथा निसर्गः शास्त्रोक्तो व्याख्यातः ॥ २५॥

अन्तर दृष्ट्याऽणोरणीयान् ॥ २६॥

स्वरूपदृष्ट्या महतो महीयान् ॥ २७॥

ज्ञानस्य ज्ञात्रधीनत्वात्स एव मूलरूपमितिचेत् ॥ २८॥

न निद्रादौ चिन्मात्रस्य शेषत्वात् ॥ २९॥

अत एव तत्रानुभूतिमात्रं नाहङ्कारदर्शनम् ॥ ३०॥

ज्ञातुर्ज्ञाने ममकारात्तस्य तदीयत्वव्यवहारः ॥ ३१॥

प्रतिदिवसमन्तरोत्पत्तिविनाशप्रसङ्ग इति चेत् ॥ ३२॥

प्रादुर्भावलयौ नोत्पत्तिविनाशौ ॥ ३३॥

प्रकृताविभक्ततयाऽवस्थानं लयः ॥ ३४॥

विभक्ततयोद्गमः प्रादुर्भावः ॥ ३५॥

एतेन शास्त्रोक्तो जीवस्य निद्रायां स्वाप्ययो व्याख्यातः ॥ ३६॥

आदेश्च विषयिणो जीववत्प्रादुर्भावलयापत्तिरिति चेत् ॥ ३७॥

इष्टत्वादनापत्तिः ॥ ३८ ॥

अन्तरानर्थान्तरत्वाद्विषयिणः ॥ ३९ ॥

अन्तरस्योपाधिसापेक्षत्वात् ॥ ४० ॥

उपाधेरादिमत्त्वाच्च विषयीप्रादुर्भवति ॥ ४१ ॥

विषय्यात्मा चेदन्यप्रकृतिकः स्यात् ॥ ४२ ॥

ज्ञानमात्मा चेदज्ञातेति चेत् ॥ ४३ ॥

आत्मनो वाच्योऽर्थो विषयी ॥ ४४ ॥

लक्ष्योऽर्थो ज्ञानम् ॥ ४५ ॥

तद्ब्रह्म प्रज्ञानं ब्रह्मेति शास्त्रात् ॥ ४६ ॥

विषयिद्वारा जानातीति ज्ञातृत्वम् ॥ ४७ ॥

ज्ञातृज्ञानविभागो विषयसापेक्षः ॥ ४८ ॥

दिग्विभागवत् ॥ ४९ ॥

विषयो ज्ञानं परिच्छिन्नमिवानुभावयेदावरणात् ॥ ५० ॥

ज्ञातुर्विषयाकारज्ञानसाक्षात्करणं विषयप्रत्यक्षम् ॥ ५१ ॥

विषयसंस्काराकारज्ञानसाक्षात्करणं विषयस्मृतिः ॥ ५२॥

अबाह्यदृष्टेर्ज्ञानरङ्गस्थले विषयसंस्काराकारज्ञानसामग्र्या व्यष्टेर्नैसर्गिकः सर्गः स्वप्नः ॥ ५३॥

दिव्यदृष्टेर्माया ॥ ५४॥

विषयिणः प्रकृतावप्ययो निद्रा ॥ ५५॥

मानसाभिमुखकिरणोपसंहारेण स्फुरणापायात् ॥ ५६॥

निसर्गतो विश्रान्त्यर्थः ॥ ५७॥

पीडाबलाच्चेन्मोहः ॥ ५८॥

योगाच्चेन्निर्विकल्पसमाधिः ॥ ५९॥

स्फुरत एव शुद्धे ज्ञाने स्थितिर्निष्ठा ॥ ६०॥

एकविषयस्मृतिधारा धारणा ॥ ६१॥

निष्ठाधारणयोः साधारणं नाम ध्रुवास्मृतिः ॥ ६२॥

तपः पूर्वस्य च ॥ ६३॥

असिद्धस्य ज्ञातुर्विषयेषु गतिनियमः पाशकुण्ठत्वात् ॥ ६४॥

यावदिन्द्रियसन्निकर्षं ग्रहणम् ॥ ६५॥

यावत्संस्कारं स्मृतिः ॥ ६६॥

धूतसर्वपाशानां दिव्यकरणोन्मीलनादतीन्द्रियेष्वपि गतिः ॥ ६७॥

विज्ञानमयः कोशो दिव्यं करणम् ॥ ६८॥

विज्ञानस्य कोशत्वासङ्गतिरिति चेत् ॥ ६९॥

तत्र तद्विकासबाहुल्यात्तद्वादः ॥ ७०॥

ज्ञानविशेषो विज्ञानमुच्यते ॥ ७१॥

अन्या वेदना ॥ ७२॥

परप्रयत्नादपि बलाद्दिव्यकरणोन्मीलनम् ॥ ७३॥

तदुपरमे पुनर्निमीलनम् ॥ ७४॥

इन्द्रियदोषादन्यथा ग्रहणे तदाकारज्ञानस्य साक्षात्करणं भ्रमः ॥ ७५॥

सन्दिग्धतया ग्रहणे संशयः ॥ ७६॥

ज्ञेयबाहुल्येन ज्ञानबहुत्वोपचारः ॥ ७७॥

उपाधिभेदाद्विज्ञानवेदनाभेदः ॥ ७८॥

**द्वितीयःपादः**

ज्ञानं साक्षात्करणान्नान्यदित्येके ॥ १॥

न तस्य क्षणभङ्गुरत्वात् ॥ २॥

नेष्टापत्तिः शास्त्रविरोधात् ॥ ३॥

कर्तरि प्रत्यय इति चेत् ॥ ४॥

न प्रज्ञायाः प्रकृतत्वात् ॥ ५॥

अविभुत्वाद्विषयिणः ॥ ६॥

विभुत्वे सर्वमनोज्ञानेन्द्रियसंयोगात्सर्वज्ञत्वं ॥ ७॥

नियतोपाधिसम्बन्धबन्धो नियामक इति चेत् ॥ ८॥

एकस्य विभोरुपाधिसम्बन्धाद्बहुत्वं लाघवाद्बिम्बाकाशवत् ॥ ९॥

स एको विषय्येवास्त्विति चेत् ॥ १०॥

न तस्य हृदयसापेक्षत्वात् ॥ ११॥

हृदयवतः पृथगहङ्कर्तृत्वम् ॥ १२॥

पृथगहङ्कर्ता चेत्सर्वान्तरो न साक्षादहङ्कर्तुरणीयस्त्वात् ॥ १३॥

व्यापकेन चित्स्वरूपेणेति चेत् ॥ १४॥

सिद्धं ज्ञानस्यैव विभुत्वम् ॥ १५॥

निद्रायामनुभूतेरेकधारत्वेन दैर्ध्यमङ्गीकर्तव्यं स्यात् ॥ १६॥

स्फुरतो विषयिणश्चावस्थानम् ॥ १७॥

तर्हि बुद्धेरक्षणिकत्वप्रसङ्गः ॥ १८॥

निद्रायाश्च सम्प्रज्ञातत्वप्रसङ्गः ॥ १९॥

मनसः पुरीततिप्रवेशादनुभूत्यभाव एव निद्रेति चेत् ॥ २०॥

चक्षुरादिवन्मनसश्च नियतस्थानकत्वान्नान्यत्र गतिः ॥ २१॥

अयुक्तिश्च स्थानविशेषस्य विभुसंयोगाप्रतिबन्धकत्वात् ॥ २२॥

तस्माद्विषयिवृत्तिभ्योऽन्यदेवज्ञानम् ॥ २३॥

वृत्तयो ज्ञातुर्गुणा इत्येके ॥ २४॥

व्यापारानन्यत्वात्कर्माणीति वासिष्ठः ॥ २५॥

विषयिण्यनुभूतिसंस्काराः ॥ २६॥

विषयाणामिव संस्काराणामपि भासनं ज्ञानस्य निसर्गः ॥ २७॥

ज्ञानं स्वयं तदाकारं भूत्वा भासयति चेत्प्रमाणेन तत्साधयितव्यम् अप्रसिद्धेर्लोके ॥ २८॥

तत्प्रतिबिम्बं गृहीत्वा चेदन्तरालसिद्धेरविभुत्वम् ॥ २९॥

सूक्ष्मभासा भासकत्वाच्चेत्करणत्वप्रसङ्गः ॥ ३०॥

# विश्वमीमांसा (८)

## प्रथमोऽध्यायः

### शास्त्रारम्भः

अथातो विश्वमीमांसा ॥ १॥

### अध्यायविषयनिर्देशः

तत्रादौ वर्णविचारः ॥ २॥

### प्रथमः पूर्वपक्षः

वर्णात्मकः शब्दो नित्यस्त्रैकालिकार्थसम्बन्धात् ॥ ३॥

वाचा विरूपनित्ययेति मन्त्रलिङ्गात् ॥ ४॥

प्रत्यभिज्ञानात् ॥ ५॥

विनश्वरद्रव्यानारब्धत्वात् ॥ ६॥

आकाशदेशो व्यापकः ॥ ७॥

संयोगविभागैरभिव्यज्यते ॥८॥

सर्वत्र श्रुतिप्रसङ्ग इति चेत् ॥९॥

यावति देशेऽभिव्यञ्जकानां गतिस्तावत्येवाभिव्यक्तेरदोषः ॥१०॥

तेषां मुख एवोपरतत्वान्न गतिरिति चेत् ॥११॥

उच्चारणाभिघातप्रेरितवायुप्रतिबाधितवाय्वन्तरजा अन्येते ॥१२॥

वायोरप्रत्यक्षत्वादप्रत्यक्षाः ॥१३॥

यावद्वेगमभिप्रतिष्ठन्ते ॥१४॥

तद्वङ्गे श्रोत्रप्रत्यासन्ने गृह्यते ॥१५॥

संयोगविभागोपरमे पुनरदर्शनमस्येत्यभिव्यक्तिपक्षवादः ॥१६॥

तस्य खण्डनम्

पदानामर्थसम्बन्धाद्वर्णानां न नित्यत्वसिद्धिः ॥१७॥

वर्णा एव पदं तस्मात् सिध्यतीति चेत् ॥१८॥

अवस्थिता एव वर्णाः पदं चेद् घटपदे द्वावकारौप्रसज्येयाताम् ॥१९॥

द्विरभिव्यक्तिरेव न द्वाविति चेत् ॥२०॥

सकृदभिव्यक्तस्य न शक्तिश्चेन्न द्विरभिव्यक्तस्याप्यैकरूप्यात् ॥ २१॥

विभूनां पौर्वापर्यं च प्रसज्येत ॥ २२॥

इष्टापत्तौ विभुत्वहानिः ॥ २३॥

एकत्र पूर्वापरयोन्यत्रापरपूर्वत्वं च नोपपद्यते ॥ २४॥

उच्चारयिता विभून्वर्णानितस्ततश्चारयतीति प्रसज्यते च ॥ २५॥

तस्मान्नित्यवर्णवादिनो वर्णाभिव्यक्तिक्रम एव पदं न वर्णाः ॥ २६॥

अभिव्यक्तिक्रमश्चाभिव्यञ्जनक्रमाधीनः ॥ २७॥

अभिव्यञ्जनक्रमश्च पुरुषस्य कर्म ॥ २८॥

एवं वर्णानां नित्यत्वेऽपि पौरुषेयीपदनिष्पत्तिः ॥ २९॥

वर्णानां नित्यत्वे सिद्धेऽपि यस्य नित्यत्वं न सिध्यति तेन वर्णनित्यत्वसाधनयत्नश्चित्रः ॥ ३०॥

अनित्यस्य त्रैकालिकार्थसम्बन्धः कथमिति चेत् ॥ ३१॥

सामयिकत्वाद्यथोत्तरत्र निरूपयिष्यामः ॥ ३२॥

मन्त्रे नित्ययेत्याभीक्ष्ण्यार्थकं पदं स्तुतिप्रकरणौचित्यात् ॥ ३३॥

न चात्र शब्दः प्रमाणमितरेतराश्रयान्नित्यत्वाद्धि वः शब्दः प्रमाणम् ॥ ३४॥

सजात्याच्च प्रत्यभिज्ञानादुत्तरमकारणम् ॥ ३५॥

अनारब्धत्वस्यानिरूपणात्परम् ॥ ३६॥

वायवीयत्वखण्डनमपर्याप्तं तैजसत्वस्यापि प्राप्तत्वात् ॥ ३७॥

आकाशस्य गुणश्चेत्तद्देश एकस्य बहु सजातीयविभुगुणकत्वं बहुत्वाद्वर्णानाम् ॥ ३८॥

बहूनां विभूनामेकत्र समवायो निर्युक्तिकः ॥ ३९॥

स्वतन्त्रं द्रव्यान्तरं चेद् बहुविभुद्रव्यापत्तिर्बहुत्वाद्वर्णानाम् ॥ ४०॥

विभोः स्वतन्त्रस्येतरदेशाश्रयत्वं च विरुद्धम् ॥ ४१॥

आवरणापनोदनमात्रेणाभिव्यक्तिश्चेदेकस्याभिव्यक्तावितरेषां च दर्शनं समानदेशत्वात् ॥ ४२॥

मन्द्रमध्यमतारत्वानामनुपपत्तिः ॥ ४३॥

उच्चारकविशेषकृतस्वरविशेषाणाम् ॥ ४४॥

उच्चारकबाहुल्ये शब्दबाहुल्यस्य च ॥ ४५॥

नादस्यैव मन्द्रत्वादिस्वरविशेषबाहुल्यानि न शब्दस्येति चेत् ॥ ४६॥

नादो गुणश्चेच्छब्दस्य द्रव्यत्वापत्तिः ॥ ४७॥

अस्त्विति चेत्तत्त्वनिरूपणपद्धतिरन्यादृशी स्यात् ॥ ४८॥

अन्यः शब्दश्चेत्सोऽपि नित्योऽभिव्यङ्ग्यस्तुल्यन्यायात् ॥ ४९॥

अभिव्यक्तौ न विशेषाः ॥ ५०॥

जायत इति चेद्विभुगुणवत्त्वं क्षणिकगुणकत्वं चाकाशस्य ॥ ५१॥

उभयत्रापि तयोः पार्थक्येन श्रवणम् ॥ ५२॥

अस्तु संयोग इति चेत् ॥ ५३॥

गुणयोर्गुणवत्त्वप्रसङ्गः ॥ ५४॥

उभयसमवेतं द्रव्यं गृह्यत इति चेत् ॥ ५५॥

शब्दप्रत्यक्षे नभः प्रतीतेश्च प्रसङ्गः ॥ ५६॥

वायवीयाः संयोगविभागा एव नाद इति चेत् ॥ ५७॥

अप्रसिद्धार्थकल्पमननुभवापलापश्च ॥ ५८॥

स श्रव्य एव हि न स्पृश्यः स्यात् ॥ ५९॥

अभिव्यक्त्यनुपपत्तिश्चावरणासिद्धेः ॥ ६०॥

नित्यस्य नित्यमनुपलब्धेः किमप्यनुमीयत इति चेत् ॥ ६१०॥

तस्यानुपलब्धेः किमपि तस्यापि किमपीत्यनवस्था ॥ ६२॥

श्रोत्रप्रत्यासन्नश्चेद्गृह्यते वक्तृमुखप्रत्यासन्न दिगज्ञानम् ॥ ६३॥

उच्चारणकर्मणश्चाक्षुषत्वादुपपत्तिरिति चेत् ॥ ६४॥

नोच्चारकादर्शनेऽपि तत्प्रतीतेः ॥ ६५॥

नाभिव्यञ्जकगतिद्वारा तेषामप्रत्यक्षत्वात् ॥ ६६॥

तस्मान्नाभिव्यज्यन्ते वर्णाः ॥ ६७॥

द्वितीयः पूर्वपक्षः

उच्चारणे संयोगविभागाभ्यां जायते वर्णात्मकः शब्दः ॥ ६८॥

आकाशस्य गुणस्तत्समवेतत्वात् ॥ ६९॥

*(७०तः ७६ पर्यन्तं सूत्राणि नोपलभ्यन्ते)*

आकाशस्याप्रत्यक्षत्वे लिङ्गसाध्यत्वप्रसङ्गः ॥ ७७॥

इष्टं यच्छब्दाल्लिङ्गादेव सिध्यतीति चेत् ॥ ७८॥

शब्दस्य ग्रहण एवाकाशप्रतीतिप्रसङ्गः ॥ ७९॥

अनुभूतिरन्यथाऽन्वयव्यतिरेकाभ्याम् ॥ ८०॥

भूतान्तरालभावप्रत्यक्षमेव नाकाशप्रत्यक्षमिति चेत् ॥ ८१॥

नाकाशदेशपरममहत्त्वप्रत्यक्षात् ॥ ८२॥

घटाकाशादिप्रत्यक्षाच्च ॥ ८३॥

आकाशस्य चाक्षुषत्वे तस्य रूपवत्त्वप्रसङ्ग इति चेत् ॥ ८४॥

रूपवदेव चाक्षुषमिति न नियमः ॥ ८५॥

देशत्वाच्चाक्षुषत्वम् ॥ ८६॥

सर्वाशयत्वात्परिमाणवैभवाच्च देशत्वं ॥ ८७॥

चाक्षुषा चाक्षुषयोरप्रत्यक्ष इति चेत् ॥ ८८॥

अप्रत्यक्षस्य कथं सिद्धिः ॥ ८९॥

गुणस्य द्रव्ये समवायनियमात् ॥ ९० ॥

परत्रासमवायात् ॥ ९१ ॥

श्रोत्राकाशे समुपलब्धेश्च ॥ ९२ ॥

श्रोत्राकाशे चेत्समुपलभ्यते नासाकाशे न कुतः ॥ ९३ ॥

तस्यानिन्द्रियत्वादिति चेत् ॥ ९४ ॥

इन्द्रियाकाशस्यैव गुणः प्रसज्येत ॥ ९५ ॥

श्रोत्राकाशं च नेन्द्रियमवाचां तत्सत्त्वेऽपि श्रवणेन्द्रियविरहात् ॥ ९६ ॥

सर्पाणां चक्षुषा श्रवणाच्च ॥ ९७ ॥

शब्दाच्छब्दसन्तानोत्पत्तौ पूर्वस्य स्थाने पर एव न गतिः ॥ ९८ ॥

तरङ्गवदिति चेत् ॥ ९९ ॥

चलनापत्तेर्गुणस्य क्रियावत्त्वप्रसङ्गः ॥ १०० ॥

कदम्बकोरकवदिति चेत् ॥ १०१ ॥

परिमाणापत्तेर्गुणस्य गुणवत्त्वप्रसङ्गः ॥ १०२ ॥

श्रोत्रोत्पन्नश्चेद्दृह्यते प्रथमशब्द दिगज्ञानम् ॥ १०३ ॥

उच्चारणकर्मणश्चाक्षुषत्वादुपपत्तिरिति चेत् ॥ १०४ ॥

नोच्चारकादर्शनेऽपि तत्प्रतीतेः ॥ १०५ ॥

अद्रव्यस्य गतेरभावान्मार्गस्य चाभावः ॥ १०६ ॥

# विश्वमीमांसा (९)

## प्रथमोऽध्यायः

### प्रथमः पादः

अथातो विश्वमीमांसा ॥ १॥

यदनुभवति यदनुभवनं यच्चानुभूयते तद्विश्वम् ॥ २॥

तां त्रिपुटीमाचक्षते ॥ ३॥

पूर्वमुत्तरयोः प्रकृतिः ॥ ४॥

आत्मा वा इदमेक एवाग्र आसीदिति ब्राह्मणमत्र भवति ॥ ५॥

अभौतिकः प्राण आत्मा ॥ ६॥

आनीदवातं स्वधया तदेकमिति निगमोऽत्र भवति ॥ ७॥

स्वधा स्वशक्तिः प्राणस्यादेः ॥ ८॥

न स्वशक्त्या स्वस्य स द्वितीयत्वम् ॥ ९॥

स्वतन्त्रद्वितीयवस्तुनिषेधस्यैव तत्र विवक्षितत्वात् ॥ १० ॥

द्रव्यसमवेतोऽतीन्द्रियः प्रसार्यद्भुतकर्माभावः शक्तिः ॥ ११ ॥

न चास्या अगुणत्वनियमः ॥ १२ ॥

तस्याः क्रिया गुणवत्वान्न क्रियात्वं गुणत्वं वा ॥ १३ ॥

तस्यास्तद्रव्यैः साधर्म्यम् ॥ १४ ॥

द्रव्यसमवेतत्वान्न द्रव्यत्वम् ॥ १५ ॥

तत्क्रिया गुणैः साधर्म्यम् ॥ १६ ॥

आत्मा जीव इत्यनर्थान्तरम् ॥ १७ ॥

जीव आत्मविशेष इति चेत् ॥ १८ ॥

तत्साधारणनामैवानेन जीवेनात्मनाऽनुप्रविश्येति शास्त्रे प्रयोगात् ॥ १९ ॥

जीवस्य विकसन्ती स्वधा तप उच्यते ॥ २० ॥

आलोचनानुभूतिस्तत्स्वरूपम् ॥ २१ ॥

तत्रात्मन आत्मैव विषयः ॥ २२ ॥

7

विषयो भवन्नात्मैवाकाशः ॥ २३ ॥

विषयविषयित्वाभ्यामेकस्य द्वैविध्यं तपोदृष्टिमूलम् ॥ २४॥

तत्र विभागे विषय्यणोरणीयानन्तरः सम्पद्यते ॥ २५॥

स्वधया महतो महीयान् ॥ २६॥

स्वधाविकासात्प्रागविभक्तं वस्तुरूपमनिर्वचनीयम् ॥ २७॥

तन्महतो महीयो मूलवस्तुनो विभुत्वादित्येके ॥ २८॥

तच्चाणोरणीयो विभुत्वस्य सापेक्षत्वादिति परे ॥ २९॥

विभुत्ववदणिष्ठत्वस्यापि सापेक्षत्वमिति वासिष्ठः ॥ ३०॥

यावदनुभूतिवैभवं विषयवैभवम् ॥ ३१॥

तस्मादाकाशश्च विभुः ॥ ३२॥

विषयिणोऽणिष्ठत्वे विभोर्विषयस्य ततः पार्थक्यापत्तिरिति चेत् ॥ ३३॥

न विषयस्यात्मत्वेनैवानुभूतेः ॥ ३४॥

स्वधाऽऽकाशयोर्विभुत्वसङ्घर्ष इति चेत् ॥ ३५॥

नानुभूतेराकाशसंवादित्वात् ॥ ३६॥

अहं मामनुभवामीति विषयिणाऽन्वेत्यनुभूतिः ॥ ३७॥

स्पष्ट एव कर्तुः कर्मणा सहाभेदः ॥ ३८॥

मयाऽहमनुभूय इति विषयेणान्वेत्यनुभूतिः ॥ ३९॥

स्पष्ट एव कर्मणः कर्त्रा सहाभेदः ॥ ४०॥

एवमखण्डानुभूतिरेव विषयविषयिणोराद्ययोर्विभुत्वाय ॥ ४१॥

विषयिणोऽन्तरत्वसदणिष्ठता चोच्यते ॥ ४२॥

एवमात्मनो महतो महीयस्त्वमणोरणीयस्त्वं च शास्त्रोक्ते व्याख्याते ॥ ४३॥

अनुभूतिरेवाद्येत्येके ॥ ४४॥

न पराश्रितत्वात् ॥ ४५॥

आदिवस्तूनि स्वधायाश्च सत्त्वान्नैकस्य प्रकृतित्वमिति चेत् ॥ ४६॥

तस्यास्तत्र लीनत्वेनानुभूतेरनुल्लासादुपपत्तिः ॥ ४७॥

अननुभवं वस्त्वसत्प्रसज्येतेति चेत् ॥ ४८॥

तदसता साधर्म्यं नासत्त्वं तच्छक्तेस्तत्र गूढत्वात् ॥ ४९॥

एतेनासतः सदजायतेति निगमो व्यख्यातः ॥ ५०॥

अस्माकमाकाश आत्मा चेदात्मनो दृश्यकोटिप्रवेशः ॥ ५१॥

न चेदाद्याकाशादन्यत्वमिति चेत् ॥ ५२॥

विषयो भवन्नात्मैवास्माकमप्याकाशः ॥ ५३॥

परममहानित्येव प्रत्यक्षो भवति न केनचिद्रूपेणेति न दृश्यकोटौ ॥ ५४॥

शब्देन गुणेन श्रव्यकोटाविति चेत् ॥ ५५॥

शब्दो नाकाशस्य गुणो यथोत्तरत्र निरूपयिष्यामः ॥ ५६॥

यदेव खं तदेव कमित्याकाशानन्दयोरेकत्वाभिधायकं शास्त्रम् ॥ ५७॥

को ह्येवान्यात्कः प्राण्याद्यदेष आकाश आनन्दो न स्यादिति च ॥ ५८॥

आत्मनः पञ्चसु भूतेष्वन्यतमत्वप्रसक्तिरिति चेत् ॥ ५९॥

अन्तरिक्षं पञ्चसु भूतेषु नाकाशः ॥ ६०॥

आकाशो द्यौरित्यनर्थान्तरम् ॥ ६१॥

द्यामाश्रितं सूक्ष्मद्रव्यात्मकमर्थान्तरमन्तरिक्षम् ॥ ६२॥

उभया विवेकमूलक उभय नामसङ्करः ॥ ६३॥

औपम्यविरोध इति चेत् ॥ ६४॥

विषयविषयित्वाभ्यां भेदात्सङ्गतिः ॥ ६५॥

एतेनेतरे भेदनिर्देशाः सर्वे व्याख्याताः ॥ ६६॥

विषयिणः सत्याख्या मूलसत्यत्वात् ॥ ६७॥

ऋताख्या विषयस्य प्रासत्वात् ॥ ६८॥

ऋतं च सत्यं चाभीद्धात्तपसोऽध्यजायतेति निगमः ॥ ६९॥

विषयविषयित्वाभ्यां विभाग एवात्र जन्मोच्यते ॥ ७०॥

विश्वस्यादिरियमाद्या त्रिपुटी ॥ ७१॥

आत्मा स्वधा द्यौरिति ॥ ७२॥

तत्राप्यादिरात्मा ॥ ७३॥

**द्वितीयः पादः**

अन्तर उत्पद्यते चेदात्मन उत्पत्तिप्रसङ्गः ॥ १॥

नित्यश्चेत्सर्गात्प्रागपि त्रिपुटीति चेत् ॥ २॥

सृष्टावात्मनोऽन्तरीभावो नान्तरत्वमेवात्मलक्षणमित्यविरोधः ॥ ३॥

अन्तरस्य स्थानं नियतं चेदात्मनो नित्यावंशौ प्रसज्येयाताम् ॥ ४॥

अन्यथा कुतो न सर्वत्राहङ्कार इति चेत् ॥ ५॥

न स्थाननियमस्तथाप्येकत्र तदुदयनियमो व्यष्टौ समष्टौ चेत्यविरोधः ॥ ६॥

यत्राहङ्कृतिस्तत्रान्तरनिष्पत्तिः ॥ ७॥

न यत्रान्तरनिष्पत्तिस्तत्राहङ्कृतिः ॥ ८॥

हृद्युपदेशो नोपपद्यते व्यष्टाविति चेत् ॥ ९॥

अन्तरस्यैव हृदाख्येत्यविरोधः ॥ १०॥

एतेन हृदयाक्षिमण्डलादिभिन्नस्थानोक्तिर्व्याख्याता ॥ ११॥

स्वधा बुद्धिश्चेद्गुणत्वप्रसङ्गः ॥ १२॥

न चेन्नोपलब्धिरिति चेत् ॥ १३॥

बुद्धेर्गुणत्वमपसिद्धान्त इत्यविरोधः ॥ १४॥

वृक्षादिषु तददर्शनादविभुत्वमिति चेत् ॥ १५॥

स्वधाविशेषो बुद्धिर्न बुद्धेरेव स्वधा ॥ १६॥

रसो बुद्धिरिति स्वधा द्वेधा ॥ १७॥

यत्रानुभूतौ प्रतिकूलमनुकूलं वा वेदनामात्रं स रसः ॥ १८॥

यत्र वेद्यविवेकः सा बुद्धिः ॥ १९॥

इष्टो रसः सुखम् ॥ २०॥

अनिष्टो दुःखम् ॥ २१॥

यथावद्वेद्यसंवादिनी बुद्धिर्विद्या ॥ २२॥

वेद्यविसंवादिन्यविद्या ॥ २३॥

वेद्यविवेके कुण्ठा च ॥ २४॥

सा व्यतिरेकेणानुभूतिः ॥ २५॥

बुद्धिर्भवन्त्येव रसश्च भवत्याद्यायां त्रिपुट्यां स्वधा ॥ २६॥

योगिनामात्मानुभूतिषु च ॥ २७॥

रसस्यापि बुद्धिपदेन व्यवहारो भाक्तः ॥ २८॥

ततो रात्रिरजायतेत्याह ॥ २९॥

आत्मानुभूतिधारैवात्मनः कालत्वेन निष्पन्नेति पश्यन् ॥ ३०॥

सूर्योत्पत्तेः प्राक् कालस्य रात्रिशब्देनाभिधानं परोक्षया वाचा ॥ ३१॥

काल एव स्त्र्याख्यया काली ॥ ३२॥

एतेन काल्यास्तन्त्रप्रसिद्धं रात्रिनाम व्याख्यातम् ॥ ३३॥

स्वधैव धारावाहिनी कालीत्युक्तं भवति ॥ ३४॥

अनुभूतेर्धारावाहित्वान्नान्यस्तदात्रिपुट्यां विशेषः ॥ ३५॥

अद्यापि सा तदवस्था ॥ ३६॥

सत्यं सन्नामान्तरेण ॥ ३७॥

तस्यैव विभूतयोऽन्ये देवताः ॥ ३८॥

एकं सद्विप्रा बहुधा वदन्तीति निगमोऽत्र भवति ॥ ३९॥

सत्पुमाख्यया भवो भवतेः सत्तार्थकत्वात् ॥ ४०॥

एतेन कालीभवयोर्दाम्पत्यं व्यख्यातम् ॥ ४१॥

भवस्याध्यात्मिकं नाम रुद्रो यदयं देहमुत्सृजन् रोदयति ॥ ४२॥

॥ इति प्रथमं लेखनम् ॥

# विश्वमीमांसा (१०)

## प्रथमोऽध्यायः

अथातो विश्वमीमांसा ॥ १ ॥

तत्रादावक्षरविचारः ॥ २ ॥

अक्षरं कर्मैके कर्मेन्द्रियव्यापारत्वात् ॥ ३ ॥

नाचाक्षुषत्वादिति चेत् ॥ ४ ॥

अचाक्षुषस्याचाक्षुषं वायोर्गमनवत् ॥ ५ ॥

नोच्चारणव्यापारादन्यत्वात् ॥ ६ ॥

गुणमिन्द्रियार्थत्वादन्ये ॥ ७ ॥

विभोराकाशस्य तत्समवायात् ॥ ८ ॥

अव्याप्यवृत्तिर्बुद्धिवत् ॥ ९ ॥

क्षणिकश्च ॥ १० ॥

उच्चारणे संयोगविभागाभ्यां तन्निष्पत्तिः ॥ ११ ॥

गुणस्य गत्यभावाच्छ्रोत्रेऽनुपलब्धिरिति चेत् ॥ १२ ॥

शब्दाच्छब्दसन्तानोत्पत्तिः ॥ १३ ॥

श्रोत्रोत्पन्नो गृह्यते ॥ १४ ॥

उत्तरोत्तरेण पूर्वपूर्वस्य नाशः ॥ १५ ॥

अदृष्टान्तस्तु बुद्धिवदित्यसर्वसम्मतत्वात् ॥ १६ ॥

प्रत्यक्षे परसम्मतिरनपेक्ष्येति चेत् ॥ १७ ॥

बुद्ध्यार्थभासक्षणिकत्वस्य बुद्धावारोपः ॥ १८ ॥

गुणोऽयं गुणिनो लक्षणं लिङ्गं वा चेदस्य ग्रहण एव तस्य प्रत्ययः ॥ १९ ॥

अनुभूतिरन्यथा दृश्यते ॥ २० ॥

सोऽस्य जन्मदेशमात्रं चेन्न समवायसिद्धिर्मेघवत् ॥ २१ ॥

समवायिकारणं चेत्समवायः सिध्येत् ॥ २२ ॥

समवेतस्याश्रयचलनं विना न प्रदेशान्तरगमनम् ॥ २३ ॥

सन्तानोत्पत्तावप्येकस्य स्थाने परः ॥ २४ ॥

तरङ्गवदिति चेच्चलनात् क्रियावत्त्वस्य प्रसक्तिः ॥ २५॥

कदम्बकोरकवदिति चेत् ॥ २६॥

परिमाणाद्गुणवत्त्वस्य ॥ २७॥

श्रोत्रोत्पन्नश्चेद्गृह्यते प्रथमशब्ददिगज्ञानम् ॥ २८॥

उच्चारणकर्मणश्चाक्षुषत्वादुपपत्तिरिति चेत् ॥ २९॥

उच्चारकादर्शनेऽपि तत्प्रतीतेरनुपपत्तिः ॥ ३०॥

प्रतिघातिद्रव्यसंयोगाच्चरमस्य नाशे गुणस्य गुणः ॥ ३१॥

अन्त्योपान्त्ययोः सुन्दोपसुन्दन्यायेन परस्परवध इति चेत् ॥ ३२॥

सङ्ग्रामस्य सत्यत्वे सङ्घर्षणात्मकसंयोगस्यापत्तिः ॥ ३३॥

अन्यथा न्यायानन्वयः ॥ ३४॥

अन्त्योपान्त्ययोः प्रथमादिभ्यः प्रकृतिवैलक्षण्यं चाहेतुकम् ॥ ३५॥

क्षीणबलत्वादन्त्यस्य नाश इति चेत् ॥ ३६॥

वेगोपरम एव क्षीणबलत्वमिति गुणस्य वेगवत्त्वप्रसङ्गः ॥ ३७॥

निमित्तवेगोपरम इति चेत् ॥ ३८॥

बाणवत्परवेगमूलकक्रियावत्त्वप्रसङ्गः ॥ ३९॥

विभोर्विभुं गुणमितरे ॥ ४०॥

तस्याभिव्यक्तिः संयोगविभागैः ॥ ४१॥

सर्वत्र श्रुतिप्रसङ्ग इति चेत् ॥ ४२॥

यावत्यभिव्यञ्जकानां गतिस्तावत्यभिव्यक्तेरदोषः ॥ ४३॥

तेषां मुख एवोपरतत्वान्न गतिरिति चेत् ॥ ४४॥

अन्ये ते ॥ ४५॥

अभिघातप्रेरितवायुचालितवाय्वन्तरजाः ॥ ४६॥

वायोरप्रत्यक्षत्वादप्रत्यक्षाः ॥ ४७॥

यावद्वेगमभिप्रतिष्ठन्ते ॥ ४८॥

आवरणापनोदनमात्रेणाभिव्यक्तिश्चेदेकस्याभिव्यक्तौ परेषां च समानदेशत्वात् ॥ ४९॥

मन्द्रमध्यमतारत्वानुपपत्तिः ॥ ५०॥

उच्चारकविशेषकृतस्वरविशेषाज्ञानप्रसङ्गः ॥ ५१॥

अभिव्यञ्जकोत्पादकप्रेरकप्रेरकगुणसङ्क्रान्तिरिति चेत् ॥ ५२॥

चित्रा मण्डूकप्लुतिर्गुणस्य ॥ ५३॥

तथापि नेष्टसिद्धिरनभिघातगुणत्वात् ध्वनेः ॥ ५४॥

अक्षरं विभुर्गुणश्चेद् ध्वनिरपि तुल्यन्यायात् ॥ ५५॥

एकस्याभिव्यक्तिरन्यस्य जन्म चेति विरुद्धम् ॥ ५६॥

अभिव्यक्त्यनुपपत्तिश्चावरणासिद्धेः ॥ ५७॥

नित्यस्य नित्यमनुपलब्धेः किमप्यनुमीयत इति चेत् ॥ ५८॥

तस्यानुपलब्धितः किमपि तस्यापि किमपीत्यनवस्था ॥ ५९॥

गुणोऽयं गुणिनो लक्षणं लिङ्गं वा चेदस्य ग्रहण एव तस्य प्रत्ययः ॥ ६०॥

अनुभूतिरन्यथा दृश्यते ॥ ६१॥

श्रोत्रप्रत्यासन्नश्चेद्गृह्यते वक्तृमुखप्रत्यासन्नदिगज्ञानम् ॥ ६२॥

उच्चारणकर्मणश्चाक्षुषत्वादुपपत्तिरिति चेत् ॥ ६३॥

उच्चारकादर्शनेऽपि तत्प्रतीतेरनुपपत्तिः ॥ ६४॥

नाभिव्यञ्जकगतिद्वारा तेषामप्रत्यक्षत्वात् ॥ ६५॥

विभुगुणस्य विभोः प्रयोगेणाभिज्वलनमित्यपरे ॥ ६६ ॥

सूक्ष्मस्य व्यक्तीभवनमभिज्वलनम् ॥ ६७ ॥

प्रयोगबलानुसारेण मन्द्रमध्यमतारत्वमभिज्वलने विशेषात् ॥ ६८ ॥

प्रयोक्तृणामुदानकर्मसंस्कारविशेषेभ्यः स्वरविशेषाः ॥ ६९ ॥

प्रयोक्तृबाहुल्ये ध्वनितीव्रत्वमभिज्वलनातिशयात् ॥ ७० ॥

# विश्वमीमांसा (११)

## द्वितीयमाह्निकम्

केचित्प्राहुर्ध्वनिः शब्द आकाशस्य गुणः ॥ १॥

उत्पत्तिविनाशवान् ॥ २॥

अव्यक्ताकारः केवलो व्यक्ताकारो वर्णात्मकः ॥ ३॥

प्रयोगे संयोगविभागौ वर्णात्मकस्योत्पत्तेर्हेतुः ॥ ४॥

प्रदेशान्तरजस्य श्रोत्राभ्यां ग्रहणं नोपपद्यत इति चेत् ॥ ५॥

शब्दाच्छब्दसन्तानस्य सजातीयस्योत्पत्तिस्तस्य स सर्वासु दिक्षूपलम्भाद् अविरोधः ॥ ६॥

यावद्वेगं शब्दसन्तानोत्पादनमिति ॥ ७॥

शब्दाकाशयोः समवायः सम्बन्धश्चेन्न परत उत्पत्तिः शब्दस्य ॥ ८॥

संयोगश्चेच्छब्दो द्रव्यान्तरं स्यात् ॥ ९॥

नीलीजस्य नैल्यस्य तन्तुष्विव समवायस्योपपत्तिरिति चेत् ॥ १० ॥

तन्नैल्यं तन्तुसंयुक्तस्य नीलीरसस्यैव न तन्तूनाम् ॥ ११ ॥

कालजस्य शोणत्वस्य फलेष्विवेति चेत् ॥ १२ ॥

सरूपपरिणाम एव नारूपे रूपोद्भवः ॥ १३ ॥

तालवृन्तसञ्चालनजस्य स्पर्शस्य वायाविवेति चेत् ॥ १४ ॥

स उत्पद्यते चेत्सहवायुः ॥ १५ ॥

वस्तुतः स सूक्ष्मस्य व्यक्तीभावो नोद्भ्वः सस्पर्शस्य वायोः ॥ १६ ॥

तस्मादाकाशगुणश्चेच्छब्दो नोत्पद्यत इत्युक्तं भवति ॥ १७ ॥

वागिन्द्रियं शब्दस्य कर्त्रभिव्यञ्जकं वा ॥ १८ ॥

तच्छून्यस्य मुखे संयोगविभागाः शब्दं न जनयन्ति ॥ १९ ॥

विद्युच्छक्तिव्यापारवदद्भुते वागिन्द्रियव्यापारे संयोगविभागानाम् अनुषङ्गः ॥ २० ॥

तस्मात्प्रधानं वागिन्द्रियं विहाय तद्व्यापारानुषक्तानां संयोगविभागानां वर्णकारणत्वोक्तिरदूरदर्शिनीत्युक्तं भवति ॥ २१ ॥

# विश्वमीमांसा (१२)

## प्रथमोऽध्यायः

### प्रथमः पादः

### वर्णविचारः

अथातो विश्वमीमांसा ॥ १ ॥

विश्वं द्वेधा वाच्यवाचकभेदात् ॥ २ ॥

वर्णात्मकः शब्दो वाचकः ॥ ३ ॥

केचिदाहुः स उत्पत्तिविनाशवानाकाशगुणः ॥ ४ ॥

उच्चारणे संयोगविभागौ तदुत्पत्तेर्हेतुः ॥ ५ ॥

प्रदेशान्तरस्थस्य श्रोत्राभ्यां ग्रहणं नोपपद्यत इति चेत् ॥ ६ ॥

शब्दाच्छब्दसन्तानोत्पत्तिस्तेषां च सर्वासु दिक्षु गतेरविरोध इति ॥ ७ ॥



शब्दाकाशयोः समवायः सम्बन्धश्चेच्छब्दस्य न परत उत्पत्तिः ॥ ८ ॥

संयोगश्चेच्छब्दो द्रव्यान्तरं स्यात् ॥ ९॥

नीलजस्य नैल्यस्य तन्तुष्विव समवायसमवायस्योपपत्तिरिति चेत् ॥ १०॥

तन्नैल्यं तन्तुसंयुक्तस्य नीलीरसस्यैव न तन्तूनाम् ॥ ११॥

कालजस्य शोणत्वस्य फलेष्विवेति चेत् ॥ १२॥

स रूपपरिणाम एव नारूपे रूपोद्भवः ॥ १३॥

तालवृन्तसञ्चालनात्स्पर्शस्य वायाविवेति चेत् ॥ १४॥

स सूक्ष्मस्य व्यक्तीभावो नोद्भवः ॥ १५॥

अन्ये प्राहुर्वायूपादानकमुत्पत्तिविनाशवद्द्रव्यं शब्द इति ॥ १६॥

नास्पर्शत्वात् ॥ १७॥

इन्द्रियान्तरग्राह्यगुणत्वाच्च ॥ १८॥

अपरे प्राहुः स नित्यो यावदाकाशं व्यापकः ॥ १९॥

संयोगविभागैरभिव्यज्यते ॥ २०॥

अभिव्यक्तस्य व्यापकत्वात्सर्वत्र श्रुतिप्रसक्तिरिति चेत् ॥ २१॥

यावत्यभिव्यञ्जकानां गतिस्तावत्येव प्रदेशेऽभिव्यक्तेरविरोधः ॥ २२॥

संयोगविभागानामुच्चारकमुख एवोपरतत्वान्न गतिरिति चेत् ॥ २३॥
अन्येति ॥ २४॥

उच्चारणाभिघातप्रेरितो वायुः स्तिमितानि वाय्वन्तराणि प्रतिबाधमानः सर्वतो दिक्कांत्संयोगविभागानुत्पादयति ॥ २५॥

वायोरप्रत्यक्षत्वादप्रत्यक्षास्ते ॥ २६॥

अभिप्रतिष्ठन्ते यावद्वेगमिति ॥ २७॥

संयोगविभागानामावरणापनोदनेनाभिव्यञ्जकत्वमात्रं चेदुच्चारकविशेषकृतस्वरविशेषानुभवानुपपत्तिः ॥ २८॥

स्वनिमित्तगुणाधायकत्वमपीति चेद्वर्णेभ्यो ध्वनिरन्योऽङ्गीकर्तव्यः ॥ २९॥

तस्य संयोगविभागनेयत्वं चाङ्गीकर्तव्यम् ॥ ३०॥

वर्णाद्ध्वनेरन्यत्वे तयोरस्पर्शत्वान्न संयोगः ॥ ३१॥

अगुणिगुणत्वान्न समवायः ॥ ३२॥

गुणिगुणत्वभ्युपगमे ध्वनेर्निमित्तगुणत्वानुपपत्तिः ॥ ३३॥

ध्वनेः संयोगविभागनेयत्वे तद्वत्तस्याभिप्रस्थानमापद्येत ॥ ३४॥

ध्वनेर्गुणत्वादाश्रयद्रव्यगतिं विना न गतिः ॥ ३५॥

संयोगविभागानां तु वायुगतेर्गतिमत्त्वम् ॥ ३६॥

शब्दस्याभिव्यक्त्यनुपपत्तिश्चावरणासिद्धेः ॥ ३७॥

नित्यस्य शब्दस्यानुपलब्धेः किमप्यनुमीयत इति चेत् ॥ ३८॥

तस्यानुपलब्धितः किमपि तस्यापि किमपीत्यनवस्था ॥ ३९॥

शब्दस्य नित्यत्वमेवादौ न सिद्धं यदवलम्बनेयमावरणानुमितिः ॥ ४०॥

त्रैकालिकार्थबोधकत्वात्तदनुमीयत इति चेत् ॥ ४१॥

वर्णाः प्रकृताः पदानि पक्षीक्रियन्ते ॥ ४२॥

वर्णा एव पदानीति चेत् ॥ ४३॥

घटपदे द्वावकारौ प्रसज्येयाताम् ॥ ४४॥

द्विरभिव्यक्तिरेव न द्वौ वर्णाविति चेत् ॥ ४५॥

वर्णाभिव्यक्तिक्रमस्यैव पदत्वं तस्यैवार्थबोधकत्वान्न वर्णानाम् ॥ ४६॥

पूर्ववर्णजनितसंस्कारसहितोऽन्त्योवर्णोऽर्थबोधक इति चेत् ॥ ४७॥

अभिव्यक्तेरेव पौर्वापर्यं न विभूनां वर्णानाम् ॥ ४८॥

अभिव्यक्तेः प्रागभिव्यक्तौ चैकरूपाणां वर्णानामभिव्यक्तिपौर्वापर्येण

न कश्चित्परिणामः ॥ ४९॥

श्रोतृबुद्धेरेव सर्ववर्णक्रमजनितः संस्कारो यदि स्यान्न पूर्ववर्णजनितोऽन्त्यस्य वर्णस्य तस्य यथास्थितत्वात् ॥ ५०॥

पदश्रवणादनन्तरमालोच्याप्यर्थनिर्णयदर्शनान्नान्त्यवर्णप्राधान्यम् ॥ ५१॥

रसः सर इति पदयोस्तुल्यार्थत्वं चापद्येत विसर्गस्योभयत्र पूर्ववर्णजनितसंस्कारस्य तुल्यत्वात् ॥ ५२॥

संस्कारक्रमो भेदक इति चेद्वर्णक्रमस्य बोधकत्वे निमित्तत्त्वम् ॥ ५३॥

अस्त्विति चेत् ॥ ५४॥

वर्णक्रमस्य भाक्तत्वादभिव्यक्तिक्रमस्य स भारः ॥ ५५॥

अन्त्यवर्णस्यान्त्यत्वस्य च भाक्तत्वात्पूर्ववर्णाभिव्यक्तिक्रमजनितसंस्कारसहितान्त्यवर्णाभिव्यक्तेरर्थबोधकत्वमित्युक्तं स्यात् ॥ ५६॥

क्रमेण वर्णाभिव्यञ्जनस्य पुरुषतन्त्रत्वात्पदानां पौरुषेयत्वम् ॥ ५७॥

तस्मान्नित्याश्चेद्वर्णाः पदानां न बोधकत्वात् ॥ ५८॥

# विश्वमीमांसा (१३)

## प्रथमोऽध्यायः

### शास्त्रारम्भः

अथातो विश्वमामांसा ॥ १॥

अध्यायविषयनिर्देशः

तत्रादावक्षरविचारः ॥ २॥

प्रथमः पूर्वपक्षः

अक्षरात्मकः शब्दो नित्यस्त्रैकालिकार्थसम्बन्धात् ॥ ३॥

वाचा विरूपनित्ययेति मन्त्रलिङ्गात् ॥ ४॥

नित्याकाशगुणत्वात् ॥ ५॥

अस्पर्शत्वात् ॥ ६॥

विनश्वरभावानारब्धत्वात् ॥ ७॥

प्रत्ययैक्याच्च ॥ ८ ॥

संयोगविभागैरभिव्यज्यते ॥ ९ ॥

सर्वत्र श्रुतिप्रसङ्ग इति चेत् ॥ १० ॥

यावति देशेऽभिव्यञ्जकानां गतिस्तावत्यभिव्यक्तेरदोषः ॥ ११ ॥

तेषां मुख एवोपरतत्वान्न गतिरिति चेत् ॥ १२ ॥

उच्चारणाभिघातप्रेरितवायुप्रतिबाधितवाय्वन्तरजा अन्ये ते ॥ १३ ॥

वायोरप्रत्यक्षत्वादप्रत्यक्षाः ॥ १४ ॥

यावद्वेगमभिप्रतिष्ठन्ते ॥ १५ ॥

तद्रङ्गे श्रोत्रप्रत्यासन्नो गृह्यते ॥ १६ ॥

संयोगविभागोपरमे पुनरदर्शनं प्राप्नोति ॥ १७ ॥

प्रथमपूर्वपक्षस्य खण्डनम्

पदानामर्थसम्बन्धाद्वर्णानां न नित्यत्वसिद्धिः ॥ १८ ॥

वर्णा एव पदमिति चेत् ॥ १९ ॥

अवस्थिताः किमाहोस्विदुच्चारिताः ॥ २० ॥

नोभयेषां भेद इति चेत् ॥ २१॥

घटपदे द्वावकारौ प्रसज्येयाताम् ॥ २२॥

द्विरभिव्यक्तिर्न द्वाविति चेत् ॥ २३॥

कुतो द्विरभिव्यञ्जनीयः ॥ २४॥

सकृदभिव्यक्तस्य न शक्तिश्चेन्न द्विरपि ॥ २५॥

द्वितीयाभिव्यक्तावपि तद्रूपस्यैव दर्शनात् ॥ २६॥

एकैकस्यासम्बन्धाच्च वर्णानां नार्थसम्बन्धः ॥ २७॥

संहतानां सत्त्वादस्तीति चेत् ॥ २८॥

अवस्थितः सङ्घातः किमाहोस्वित्पुरुषतन्त्रः ॥ २९॥

अवस्थित इति चेत् ॥ ३०॥

घटपदे द्वावकारौ प्रसज्येयाताम् ॥ ३१॥

द्विरभिव्यक्तिर्न द्वाविति चेत् ॥ ३२॥

पुरुषो विभून्वर्णानितस्ततश्चारयतीति प्रसज्येत ॥ ३३॥

द्विरभिव्यक्तस्यैकदा घकारात्परत्वमन्यदा टकारादित्यनुपपत्तेः ॥ ३४॥

पुरुषतन्त्रत्वे स्पष्टं पदानां पौरुषेयत्वम् ॥ ३५॥

पौरुषेयत्वादनित्यत्वम् ॥ ३६॥

एवमभिव्यक्तिपक्षेऽपीष्टक्रमेण वर्णाभिव्यञ्जनस्य पुरुषतन्त्रत्वात् पौरुषेयाणि पदानि ॥ ३७॥

अनित्यैः कथं त्रैकालिकार्थानां सम्बन्ध इति चेत् ॥ ३८॥

पदप्रकरणे निरूपयिष्यामः ॥ ३९॥

मन्त्रे नित्ययेत्याभीक्ष्ण्यार्थकं पदम् ॥ ४०॥

न चात्र शब्दः प्रमाणमितरेतराश्रयान्नित्यत्वेन हि वः शब्दः प्रमाणम् ॥ ४१॥

इच्छादीनां विभुगुणानामनित्यत्वदर्शनान्नित्यत्वे विभुगुणत्वमहेतुः ॥ ४२॥

कर्मसु दर्शनादस्पर्शत्वम् ॥ ४३॥

*(४४-४५ अनुपलब्धे सूत्रे)*

यथेदमेव न क्षरतीति वाऽश्नोतीति वा ॥ ४६॥

कारणनामभिः कार्याणां व्यवहारदर्शनाच्च ॥ ४७॥

# विश्वमीमांसा (१४)

*(१-९ अनुपलब्धानि)*

स्वर्गादिसाधनत्वात्करणमेवेति चेत् ॥ १० ॥

प्रयोजनस्य प्रयोजनवत्त्वे न विरोधोऽर्थवत् ॥ ११ ॥

धर्मस्य स्वयं फलप्रदत्वादपूर्वं न कल्पनीयम् ॥ १२ ॥

आत्मशक्त्युल्लासप्रतिबन्धकं दोषावरणमधर्मः ॥ १३ ॥

संस्करणेन तदपगमादात्मशक्त्युल्लासो धर्मः ॥ १४ ॥

स च सदाचरणेन क्रमाद्वर्धते न साकल्येन युगपद्भवेत्प्रायः ॥ १५ ॥

धर्मसाधनेषु धर्मत्वव्यवहारो भाक्तः ॥ १६ ॥

**द्वितीयोऽध्यायः**

अनेन कर्मणा धर्म उत्पन्न इति वित्तिः प्रत्यक्षानुमानाभ्याम् ॥ १ ॥

उत्पद्येतेति शब्दात्मादेशाभ्याम् ॥ २ ॥

साधनोपदेशाय प्रतिबन्धकनिषेधाय च शास्त्रं प्रायः ॥ ३॥

साधनानां प्रतिबन्धकानां वा प्रमाणेनोपलभ्योपदेशो निषेधो वा शास्त्रे ॥ ४॥

तदनुशासनमुच्यते ॥ ५॥

साधनानामुपदेशोऽन्वयतो धर्मानुशासनम् ॥ ६॥

प्रतिबन्धकानां निषेधो व्यतिरेकतः ॥ ७॥

प्रमाणेनावगतिः स्मृतिरुच्यते ॥ ८॥

येषां शब्द एको धर्मे प्रमाणं तेषां तदर्थावगतिमात्रं स्मृतिः ॥ ९॥

तदनुवादे तन्नामभाक्तम् ॥ १०॥

धर्मज्ञसमय एव स्मृतिरित्यापस्तम्बस्य दृष्टिः ॥ ११॥

तत्समयश्च प्रमाणद्वारा तदवगतानामर्थानामनुवादान्नातिरिच्यते ॥ १२॥

मन्वादिस्मृतीनां शब्दवत्स्वतन्त्रं प्रामाण्यं स्मर्तॄणां महिमातिशयाद् इत्येके ॥ १३॥

ताश्चेन्मन्वादीनामेवाभविष्यंस्तथैव प्रमाणमभविष्यन्निति वासिष्ठः ॥ १४॥

ब्रह्मकोश एव सन्ति मन्वादीनां दर्शनानि ॥ १५॥

स्मृतिभाषाभिन्ना तद्भाषातः ॥ १६॥

अर्वाचीननामविषयोपलम्भश्च तासु स्मृतिषु ॥ १७॥

तस्मादनृषीणामर्वाचामेव मन्वादिस्मृतयः ॥ १८॥

प्राचीननामाङ्कत्वं प्ररोचनार्थम् ॥ १९॥

तद्विलक्षणं कृतिसमर्पणमात्मग्रन्थगौरवाय ॥ २०॥

यथार्थदर्शनत्वादृषीणां शब्दस्य प्रामाण्यं नापौरुषेयत्वात् ॥ २१॥

अदृष्टहेतुकाप्रत्यक्षशब्दाविरुद्धा च स्मृतिः शब्दस्यानुमापिकेति जैमिनिः ॥ २२॥

सामान्यतः प्रमाणेनावगतेरिति वासिष्ठः ॥ २३॥

# विश्वमीमांसा (१५)

## प्रथमोऽध्यायः

### प्रथमः पादः

अथातो विश्वमीमांसा ॥ १॥

यदनुभवति यदनुभूयते यच्चानुभवनं तत्त्रयं विश्वम् ॥ २॥

तां त्रिपुटीमाचक्षते ॥ ३॥

अनुभूतिरन्ययोः प्रकृतिर्निद्रायां तस्या एकस्या एव शेषत्वात् ॥ ४॥

उत्थाने ततोऽन्ययोः प्रादुर्भावाच्च ॥ ५॥

निद्रायां च विषयो बाह्यो न नश्यति तस्मादस्तीति चेत् ॥ ६॥

एकैकदृष्टेरेकैको विषयप्रपञ्चः ॥ ७॥

तत्र समष्टेर्जगत् ॥ ८॥

व्यष्टेः संसारः ॥ ९॥

पूर्वानुवादीपरः प्रायः ॥ १०॥

यो निद्राति तत्प्रपञ्चप्रलयः ॥ ११ ॥

उत्थाने पुनस्तत्प्रपञ्चाविर्भावः ॥ १२ ॥

आद्योऽनुभविता परमात्मा ॥ १३ ॥

आद्यो विषय आकाशः ॥ १४ ॥

आद्यमनुभवनं तपः ॥ १५ ॥

अभौतिको महान्प्राणः परमात्मनो मूलरूपम् ॥ १६ ॥

आनीदवातं स्वधया तदेकमिति निगमोऽत्र भवति ॥ १७ ॥

स्वधा स्वशक्तिः ॥ १८ ॥

न स्वशक्त्या स्वस्य स द्वितीयत्वम् ॥ १९ ॥

स्वतन्त्रद्वितीयवस्तुनिषेधस्यैव तत्र विवक्षा ॥ २० ॥

स विभुर्नित्यश्च ॥ २१ ॥

निरुपाधिके तस्य तपसि विषयी भवन्नात्मैवाकाशः ॥ २२ ॥

विषयविषयित्वाभ्यामेकस्य द्वैविध्यं दृष्टिमूलम् ॥ २३ ॥

महाप्राणस्य विभूत्वेनाकाशस्य विभुत्वं व्याख्यातम् ॥ २४ ॥

आत्मनो विषयीभावस्यादिमत्वादाकशस्यादिमत्वम् ॥ २५॥

विकसन्ती स्वधैव तपो येन विषयिविषयविभागः ॥ २६॥

तत्र विभागे विषय्यणोरणीयानन्तरो निष्पन्नः तत्परमात्मनो वाच्यं रूपम् ॥ २७॥

महान् प्राणो लक्ष्यम् ॥ २८॥

महतो महीयान्निजया स्वधया ॥ २९॥

स सत्यं नामान्तरेण ॥ ३०॥

स य एषोऽणिमैतदात्म्यमिदँ सर्वं तत्सत्यमित्युपनिषदत्र भवति ॥ ३१॥

एवं विभोरपि तस्याणोरणीयस्त्वम् ॥ ३२॥

तच्छक्तेर्विभुत्वं पृथङ् न वक्तव्यम् ॥ ३३॥

*(३४ तः ६३ पर्यन्तं सूत्राण्यनुपलब्धानि)*

वाक्यभेदे तुल्यं प्राधान्यम् ॥ ६४॥

एकवाक्ये यदर्थमन्यत्तत्प्रधानम् ॥ ६५॥

तुल्यं प्राधान्यं परस्परार्थत्वे ॥ ६६॥

शेष एकदेशार्थाद्वाक्यार्थो बलवान् ॥ ६७॥

अदेवतालिङ्गो मन्त्रो गाथा नाराशंसीवास्यात् ॥ ६८॥

तयोः कर्मस्वविनियोगः ॥ ६९॥

अग्निमीळे पुरोहितमित्यादौ नामतो देवतालिङ्गम् ॥ ७०॥

रायस्कामो वज्रहस्तमित्यादौ गुणतः ॥ ७१॥

अनश्नन्नन्यो अभिचाकशीतीत्यादौ रूपकातिशयात् ॥ ७२॥

अवानो वाजयुंरथमित्यादौ पूर्वतोऽध्याहरणात् ॥ ७३॥

सनः स्तवान आभरेत्यादौ पूर्वप्रकृतार्थत्सर्वनामतः ॥ ७४॥

इषेत्वेत्यादौ मन उद्दिष्टार्थात् ॥ ७५॥

अहं रुद्रेभिरित्यादौ व्यापकात्मार्थात् ॥ ७६॥

चित्तिः स्रुगित्यादावाध्यात्मिकरूपात् ॥ ७७॥

आपो हिष्ठा मयोभुव इत्यादावाधिभौतिकरूपात् ॥ ७८॥

सोमः पवत इत्यादावधियज्ञरूपात् ॥ ७९॥

गीतियुक्तो वा स्तवः प्रयोगे ॥ ८०॥

# विश्वमीमांसा (१६)

## प्रथमोऽध्यायः

### प्रथमः पादः

अथातो विश्वमीमांसा ॥ १॥

शक्तिर्विश्वस्य मूलम् ॥ २॥

ऋतं च सत्यं चाभीद्धात्तपसोऽध्यजायतेति निगमोऽत्र भवति ॥ ३॥

तपः शक्तिः प्राण इत्यविभक्तचित्पर्यायाः ॥ ४॥

सत्यं ज्ञातृ ॥ ५॥

ऋतं ज्ञानम् ॥ ६॥

प्राणस्यांशौ ॥ ७॥

ज्ञातव्यानुधावनेष्वेष विभागः ॥ ८॥

9 वायोरपांसाराच्चान्य आदिः प्राणः ॥ ९॥

आनीदवातं स्वधया तदेकमिति निगमोऽत्र भवति ॥ १० ॥

स्वधा शक्तिश्चेच्छक्तेः शक्त्यापत्तिः ॥ ११ ॥

अभ्युपगमेऽनवस्था ॥ १२ ॥

अन्या चेदप्रसिद्धिः ॥ १३ ॥

शक्तिर्द्रव्यं स्वधा तन्निष्ठो विशेष इत्यविरोधः ॥ १४ ॥

सामर्थ्यशक्तिपदमुपचारात् ॥ १५ ॥

सामर्थ्यं च शक्तिनिष्ठो विशेषः ॥ १६ ॥

**द्वितीयः पादः**

अनुभवनं द्रव्यं चेदात्मनोऽन्यत्स्वतन्त्रम् ॥ १ ॥

गुणश्चेदात्मसमवेतमप्यन्यत् ॥ २ ॥

कर्मचेद्विनाशवच्चेति चेत् ॥ ३ ॥

शक्तिरर्थान्तरम् ॥ ४ ॥

द्रव्यादात्मनो भिन्ना स्यादिति चेत् ॥ ५ ॥

सामान्यतो भाव एवात्मा न भावविशेषः ॥ ६॥

द्रव्याणि शक्तयो गुणाः कर्माणि च तस्य विभूतयः ॥ ७॥

तप आकाशौ साक्षात् ॥ ८॥

इतरत्सर्वं परम्परया ॥ ९॥

तप आद्या शक्तिः ॥ १०॥

आकाश आद्यं द्रव्यम् ॥ ११॥

अन्तरः सामान्यतो भाव एवाभिमानात् ॥ १२॥

एवमात्मनः किञ्चिन्नान्यत् ॥ १३॥

# तत्त्वानुशासनसूत्राणि

*(प्रथमखण्डात् षष्ठखण्डपर्यन्तं सूत्राणि नोपलभ्यन्ते)*

**सप्तमः खण्डः**

अथ योगाः ॥ १॥

फलापेक्षारहितं सत्कर्म कर्मयोगः ॥ २॥

मनसा मन्त्रस्य ध्यानं मन्त्रयोगः ॥ ३॥

वायोर्निग्रहो हठयोगः ॥ ४॥

चित्तवृत्तिनिरोधो राजयोगः ॥ ५॥

आत्मविचारणं ज्ञानयोगः ॥ ६॥

अहंवृत्तिमूलान्वेषणमेवात्मविचारणं न शास्त्रचर्चा ॥ ७॥

आत्मसमर्पणं प्रपत्तियोगः ॥ ८॥

राजयोगप्रपत्तियोगपुरस्सरं नित्यं प्रवहन्त्याः शक्तेः महता मौनेना-त्मन्यवकाशं दत्वा पञ्चानां च कोशानामनवरतं चिदग्निना संस्करणं अमृतयोगः ॥ ९॥

अस्याङ्गं कल्पसेवेत्येके ॥ १०॥

## अष्टमः खण्डः

अथामृतयोगे महामौनसाधिका विद्याः ॥ १॥

केवलं सम्प्रसादेन तिष्ठेत् सा भूमविद्या ॥ २॥

प्रणवं ध्यायेत् कण्ठकुहरे स्थिरमनाः सोद्गीथविद्या ॥ ३॥

गत्यागतिप्रत्यवेक्षणद्वाराप्राणवायुं ध्यायेत् सा संवर्गविद्या ॥ ४॥

तीव्रनिर्विषयालोचनजं ऊष्माणं ध्यायेत् सा ज्योतिर्विद्या ॥ ५॥

रसं ध्यायेत् जिह्वायां स्थिरमना सा वारुणी विद्या ॥ ६॥

उपजिह्वायामिन्द्रयोनिविद्या ॥ ७॥

दृष्टिं द्रष्टारं वा ध्यायेत् सोपकोसलविद्या ॥ ८॥

# धर्मानुशासनम् (१)

## प्रथमोऽध्यायः

### ॥ १॥ शास्त्रारम्भः ॥

अथ धर्मानुशासनम् ॥ १॥

### ॥ २॥ धर्मलक्षणम् ॥

पुण्यादन्तः सत्संस्कारो धर्मः ॥ २॥

### ॥ ३॥ पुण्यलक्षणम् ॥

सत्प्रवृत्तिरसन्निवृत्तिश्चेति पुण्यम् ॥ ३॥

सत्कर्म सद्वचनं सच्चिन्तनं चेति सत्प्रवृत्तिस्त्रेधा ॥ ४॥

सत्त्रित्वेनासत्त्रित्वं व्याख्यातम् ॥ ५॥

पुण्ये च धर्मपदं लोके शास्त्रेषु च ॥ ६॥

तत्र लक्षणा रूढिः ॥ ७॥

## ॥ ४ ॥ शास्त्रनामनिर्वचनम् ॥

सहेतुतदनुबन्धस्य सप्रयोजनस्य सपरिकरस्य धर्मस्य यथा प्रमाणं शासनं धर्मानुशासनम् ॥ ८ ॥

## ॥ ५ ॥ प्रमाणानि ॥

प्रत्यक्षानुमानशब्दाः प्रमाणानि सामान्यतः ॥ ९ ॥

## ॥ ६ ॥ प्रत्यक्षम् ॥

इन्द्रियार्थसन्निकर्षोत्पन्नमव्यपदेश्यमव्यभिचारिव्यवसायात्मकं प्रत्यक्षमिति गौतमः ॥ १० ॥

दिव्यचक्षुरुत्पन्नं वेति वक्तव्यमार्षप्रत्यक्षस्य यथा सङ्ग्रहःस्यात् ॥ ११ ॥

आद्यमक्षभेदात्पञ्चविधम् ॥ १२ ॥

स्पर्शरसगन्धानां ज्ञानमनुभूतिकाल एव तदात्मकम् ॥ १३ ॥

अनुवादे स्मरणे च व्यक्ताव्यक्तशब्दात्मकम् ॥ १४ ॥

रूपस्यानुभूतौ स्मरणे च तदात्मकम् ॥ १५ ॥

अनुवादे शब्दात्मकम् ॥ १६ ॥

त्रिष्वपि तदात्मकं शब्दस्य ॥ १७॥

एवं ग्रहण एव विश्वस्मिन् विषयाः पञ्चविधाः ॥ १८॥

स्मरणे नामरूपात्मकाः ॥ १९॥

व्यवहारे केवलं शाब्दाः ॥ २०॥

॥ ७॥ अनुमानम् ॥

प्रत्यक्षेण लिङ्गेनेतरस्य प्रत्ययोऽनुमानम् ॥ २१॥

नियमेन तदेकसहवासिद्रव्यं द्रव्यान्तरस्य लिङ्गम् ॥ २२॥

एवं गुणो गुणान्तरस्य ॥ २३॥

कर्मणश्च ॥ २४॥

कर्मगुणस्य ॥ २५॥

नियतकारणं कार्यं कारणस्य ॥ २६॥

नियतोत्तराऽवस्था पुर्वस्याः ॥ २७॥

नियतकार्यं कारणं कार्यस्य ॥ २८॥

पूर्वाऽवस्था नियताया उत्तरस्याः ॥ २९ ॥

कस्यचिद्विप्रकर्षोऽन्यस्य नियमेन दूरीकर्तुः ॥ ३० ॥

विप्रकर्षश्च देशतः कालतो वा ॥ ३१ ॥

अनुभूतस्य सन्निकर्ष इव व्यावृत्तस्य विप्रकर्षश्च प्रत्यक्षः ॥ ३२ ॥

प्रमितेः प्रागभिलषितस्यैव हि व्यावृत्तिः ॥ ३३ ॥

कस्यचित्सन्निकर्षोऽन्यस्य नियमेन बाध्यस्य भूतस्य ॥ ३४ ॥

चेष्टानियतनिमित्ता निमित्तस्य ॥ ३५ ॥

सादृश्यं स्मृतोपमेयसदृशत्वेन प्रसिद्धस्य ॥ ३६ ॥

तदुपमानमन्यत्प्रमाणं गौतमस्य ॥ ३७ ॥

तत्रानुमीयत एव संज्ञासंज्ञिसम्बन्ध इति न पृथग्वक्तव्यम् ॥ ३८ ॥

एवं लिङ्गान्तराण्यप्यूह्यानि ॥ ३९ ॥

स्मरणात्मकमानुमानिकं ज्ञानम् ॥ ४० ॥

इन्द्रियप्रत्यक्षस्य वर्तमानमात्रे गतिः ॥ ४१ ॥

आर्षप्रत्यक्षानुमानिकयोस्त्रैकालिकी ॥ ४२॥

**॥ ८॥ प्रत्यक्षानुमानयोश्च धर्मे प्रमाणत्वम् ॥**

धर्मे शब्दमात्रं प्रमाणमित्यके ॥ ४३॥

अन्ययोश्च तत्र गतिरिति वासिष्ठः ॥ ४४॥

इहैव तप आदिनाऽर्थसिद्धौ तच्छुभं फलं लिङ्गं धर्ममनुमातुम् ॥ ४५॥

दिव्येन चक्षुषाऽन्तःसत्संस्कारो ज्ञातुं शक्यः ॥ ४६॥

पुण्यभावश्च प्रवृत्तिविशेषाणाम् ॥ ४७॥

**॥ ९॥ शब्दः ॥**

शब्देनार्थस्य प्रत्ययस्तत्तृतीयं प्रमाणम् ॥ ४८॥

आप्तोपदेशाच्छब्दार्थसम्बन्धवित्तिः ॥ ४९॥

स्मरणात्मकं शाब्दं ज्ञानं प्रागनुभूतेऽर्थे ॥ ५०॥

कल्पनात्मकमननुभूते ॥ ५१॥

अज्ञातस्य बुद्ध्युपस्थितस्यार्थस्याकारविशेषकरणं कल्पनम् ॥ ५२॥

शाब्दज्ञानस्य त्रैकालिकी गतिः ॥ ५३॥

**॥ १०॥ शब्दार्थसम्बन्धः ॥**

शब्दार्थयोः सम्बन्धः सहज इत्येके ॥ ५४॥

ज्ञानसमयेनैव बुद्धत्वात् ॥ ५५॥

कालभेदेन परिणामात् ॥ ५६॥

भाषाबाहुल्यात् ॥ ५७॥

नामकरणदर्शनात् ॥ ५८॥

अर्थस्य शब्देन सहसम्बन्धाभावात् ॥ ५९॥

अनर्थकशब्दानां सद्भावाच्च सामयिक इति वासिष्ठः ॥ ६०॥

**॥ ११॥ शब्दस्वरूपम् ॥**

**तार्किकमतानुवादः**

श्रोत्रग्राह्यो गुणः शब्दः ॥ ६१॥

आकाशस्य तत्समवेतत्वात् ॥ ६२॥

तत्र व्यक्तो वर्णात्मकः ॥ ६३॥

उच्चारणे संयोगविभागाभ्यां प्रथमः ॥ ६४॥

ततः शब्दसन्तानोत्पत्तिः ॥ ६५॥

निजश्रोत्रजो गृह्यते ॥ ६६॥

अनित्य उत्पत्तिनिरोधत्वात् ॥ ६७॥

**तार्किकमतखण्डनम्**

न त्वन्यस्य गुणस्तदनुभूतौ तद्वतोऽननुभूतेः ॥ ६८॥

तद्विनाऽऽकाशस्यानुभूतेश्च ॥ ६९॥

लैङ्गिक एवाकाशो न प्रत्यक्ष इति चेत् ॥ ७०॥

लिङ्गग्रहण एवाकाशप्रतीतिप्रसङ्गः ॥ ७१॥

नित्यं प्रत्यक्षमुपलभ्यते परममहानाकाशः ॥ ७२॥

घटाकाशादीनां च लिङ्गं विनोपलब्धिः ॥ ७३॥

रूपवत्त्वप्रसक्तिरिति चेत् ॥ ७४॥

रूपवदेव चाक्षुषमिति न नियमः ॥ ७५॥

देशत्वाच्चाक्षुषत्वम् ॥ ७६॥

सर्वाश्रयत्वात्परिणामवैभवाच्च देशत्वम् ॥ ७७॥

शब्दाच्छब्दसन्तानोत्पत्तौ पूर्वस्य स्थाने पर एव न गतिः ॥ ७८॥

तरङ्गवदिति चेत् ॥ ७९॥

चलनापत्तेर्गुणस्य क्रियावत्त्वप्रसङ्गः ॥ ८०॥

कदम्बकोरकवदिति चेत् ॥ ८१॥

परिमाणापत्तेर्गुणस्य गुणवत्त्वप्रसङ्गः ॥ ८२॥

श्रोत्रजश्चेद्गृह्यते प्रथमशब्ददिगज्ञानम् ॥ ८३॥

उच्चारणकर्मणश्चाक्षुषत्वादुपपत्तिरिति चेत् ॥ ८४॥

नोच्चारकादर्शनेऽपि तत्प्रतीतेः ॥ ८५॥

अद्रव्यस्य गतेरभावान्मार्गस्य चाभावः ॥ ८६॥

प्रणालिकाऽसिद्धेः पर्यवसाने च संशयः ॥ ८७॥

मीमांसकमतानुवादः

नित्यस्त्रैकालिकार्थसम्बन्धात् ॥ ८८॥

वाचा विरूपनित्ययेति मन्त्रलिङ्गात् ॥ ८९॥

प्रत्यभिज्ञानात् ॥ ९०॥

विनश्वरद्रव्यानारब्धत्वात् ॥ ९१॥

आकाशदेशो व्यापकः ॥ ९२॥

संयोगविभागैरभिव्यज्यते ॥ ९३॥

सर्वत्र श्रुतिप्रसङ्ग इति चेत् ॥ ९४॥

यावति देशेऽभिव्यञ्जकानां गतिस्तावत्येवाभिव्यक्तेरदोषः ॥ ९५॥

तेषां मुख एवोपरतत्वान्न गतिरिति चेत् ॥ ९६॥

उच्चारणाभिघातप्रेरितवायुप्रतिबाधितवाय्वन्तरजा अन्ये ते ॥ ९७॥

वायोरप्रत्यक्षत्वादप्रत्यक्षाः ॥ ९८॥

यावद्वेगमभिप्रतिष्ठन्ते ॥ ९९॥

तद्रङ्गे श्रोत्रप्रत्यासन्नो गृह्यते ॥ १००॥

संयोगविभागोपरमे पुनस्तिरोधानम् ॥ १०१॥

मीमांसकमतखण्डनम्

पदानामर्थसम्बन्धाद्वर्णानां तु न नित्यत्वसिद्धिः ॥ १०२॥

वर्णा एव पदं तस्मात् सिध्यतीति चेत् ॥ १०३॥

अवस्थिता एव वर्णा पदं चेद्धटे द्वावौ प्रसज्येयाताम् ॥ १०४॥

द्विरभिव्यक्तिरेव न द्वाविति चेत् ॥ १०५॥

सकृदभिव्यक्तस्य न शक्तिश्चेन्न द्विरभिव्यक्तस्याप्यैकरूप्यात्॥ १०६॥

विभूनां पौर्वापर्यं च प्रसज्येत ॥ १०७॥

एकत्र पूर्वापरयोरन्यत्रापरपूर्वत्वं च नोपपद्यते ॥ १०८॥

प्रसज्यते चोच्चरयिता विभूनितस्ततश्चारयतीति ॥ १०९॥

तस्मान्नित्यवर्णवादिनो वर्णाभिव्यक्तिक्रम एव न वर्णाः ॥ ११०॥

अभिव्यक्तिक्रमश्चाभिव्यञ्जनक्रमाधीनः ॥ १११॥

अभिव्यञ्जनक्रमश्च पुरुषस्य कर्म ॥ ११२ ॥

एवं वर्णानां नित्यत्वेऽपि पौरुषेयी पदनिष्पत्तिः ॥ ११३ ॥

वर्णानां नित्यत्वे सिद्धेऽपि पदनित्यत्वं न सिध्येत्तेन वर्णनित्यत्वसाधनयत्नश्चित्रः ॥ ११४ ॥

अनित्यस्य त्रैकालिकार्थसम्बन्धः कथमिति चेत् ॥ ११५ ॥

सङ्केतबलात् ॥ ११६ ॥

मन्त्रे नित्ययेत्याभीक्ष्णमार्थकं पदं स्तुतिप्रकरणौचित्यात् ॥ ११७ ॥

सा जात्याच्च प्रत्यभिज्ञानादुत्तरमकारणम् ॥ ११८ ॥

अनारब्धत्वस्यानिरूपणात्परम् ॥ ११९ ॥

वायवीयत्वखण्डनमपर्याप्तं तैजसत्वस्यापि प्राप्तत्वात् ॥ १२० ॥

आकाशस्य गुणश्चेत्तद्देश एकस्य बहुसजातीयविभुगुणकत्वं बहुत्वाद्वर्णानाम् ॥ १२१ ॥

बहूनां विभूनामेकत्र समवायो निर्युक्तिकः ॥ १२२ ॥

स्वतन्त्रं द्रव्यान्तरं चेद्बहुविभुद्रव्यापत्तिर्बहुत्वाद्वर्णानाम् ॥ १२३ ॥

स्वतन्त्रस्य विभो देशान्तराश्रयत्वं च विरुद्धम् ॥ १२४ ॥

आवरणापनोदनमात्रेणाभिव्यक्तिश्चेदेकस्याभिव्यक्तावितरेषां च दर्शनं समानदेशत्वात् ॥ १२५ ॥

मन्द्रमध्यमतारत्वानामनुपपत्तिः ॥ १२६ ॥

उच्चारकविशेषकृतस्वरविशेषाणाम् ॥ १२७ ॥

उच्चारकबाहुल्ये शब्दबाहुल्यस्य च ॥ १२८ ॥

नादस्यैव मन्द्रत्वादिस्वरविशेषबाहुल्यानि न शब्दस्येति चेत् ॥ १२९ ॥

नादः शब्दगुणश्चेच्छब्दस्य द्रव्यत्वं वक्तव्यं तन्नोक्तम् ॥ १३० ॥

अन्यः शब्दश्चेत्सोऽपि नित्योऽभिव्यङ्ग्यस्तुल्यन्यायात् ॥ १३१ ॥

अभिव्यक्तौ न विशेषाः ॥ १३२ ॥

वायवीयाः संयोगविभागा एव नाद इति चेत् ॥ १३३ ॥

अप्रसिद्धार्थकल्पनमनुभवापलापश्च ॥ १३४ ॥

स श्रव्य एव हि न स्पृश्यः ॥ १३५ ॥

10 अभिव्यक्त्यनुपपत्तिश्चावरणासिद्धेः ॥ १३६ ॥

श्रोत्रप्रत्यासन्नश्चेद्गृह्यते वक्तृमुखप्रत्यासन्नदिगज्ञानम् ॥ १३७ ॥

उच्चारणकर्मणश्चाक्षुषत्वादुपपत्तिरिति चेत् ॥ १३८ ॥

नोच्चारकादर्शनेऽपि तत्प्रतीतेः ॥ १३९ ॥

नाभिव्यञ्जकगतिद्वारा तेषामप्रत्यक्षत्वात् ॥ १४० ॥

**सिद्धान्तः**

तैजसः शक्तिविशेषः शब्द इति वासिष्ठः ॥ १४१० ॥

सर्गनित्यस्य सूक्ष्मस्य व्यापकस्य नाभसस्य तेजसो निमित्त-भेदाच्छब्दविद्युदात्मकद्विविधशक्तितरङ्गोदयः ॥ १४२ ॥

वागिन्द्रियव्यापारो वर्णात्मकशब्दोत्पत्तौ निमित्तम् ॥ १४३ ॥

द्रव्यवद्गुणक्रियावान् गुणवद्द्रव्याश्रयो भावः शक्तिः ॥ १४४ ॥

वागिन्द्रियव्यापारात्प्रथमः शब्दः ॥ १४५ ॥

ततः सर्वासु दिक्षु शब्दसन्तानोत्पत्तिस्तरङ्गवत् ॥ १४६ ॥

शब्दस्य शक्तित्वाच्चलनमस्माकमदोषः ॥ १४७ ॥

श्रोत्रेण स्वप्रत्यासन्नो गृह्यते ॥ १४८ ॥

तत्सूक्ष्मगतिज्ञानद्वारा तदुत्पत्तिदिशो ज्ञानम् ॥ १४९ ॥

निमित्तगुणवशान्मन्द्रत्वादयः स्वरविशेषाश्च ॥ १५० ॥

निमित्तबाहुल्याद्बाहुल्यम् ॥ १५१ ॥

**आक्षेपः**

शब्दस्तेजसश्चेत्तदनुभवे तदाश्रयतेजोऽनुभवप्रसङ्गो विद्युद्वत् ॥ १५२ ॥

**समाधानम्**

सूक्ष्मत्वान्न गृह्यते प्रायो निस्तेजस्कविद्युद्वत् ॥ १५३ ॥

क्वचिदुपलभ्यते च दूरश्रावकयन्त्राग्रे ॥ १५४ ॥

अनुमातुं शक्यं च शब्दग्राहकफलके शब्दगर्भं तेजःसूक्ष्ममस्तीति ॥ १५५ ॥

**अन्य आक्षेपः**

शब्दस्तैजसश्चेच्छ्रोत्राकाशे न ग्रहणस्यानुपपत्तिरसजातीयत्वात् ॥ १५६ ॥

**समाधानम्**

श्रोत्राकाशगं सूक्ष्मं तेज एव श्रोत्रेन्द्रियं न श्रोत्राकाशः ॥ १५७ ॥

तन्मान्द्यादेवश्रोत्राकाशवतश्च श्रवणदौर्बल्योपपत्तिः ॥ १५८ ॥

तस्य सुतरामस्फुटत्वादेवैकान्ततो बाधिर्यम् ॥ १५९ ॥

स्पष्टं चक्षुःश्रवःसु तेजसा श्रवणम् ॥ १६० ॥

अवागिन्द्रियाणां बाधिर्यं चात्र लिङ्गम् ॥ १६१ ॥

तेजसोऽस्फुटत्वादेव ह्यवाक्त्वं तैजसं हि वागिन्द्रियम् ॥ १६२ ॥

एकमेव तेजः सूक्ष्मं स्थानभेदात्कार्यभेदकृत् ॥ १६३ ॥

तेज एव तेजसि शब्दतरङ्गानुत्पादयेत् ॥ १६४ ॥

तेज एव श‍ृणुयात् ॥ १६५ ॥

**॥ १२ ॥ शब्दनित्यत्वम् ॥**

शब्दप्रकृतेर्नित्यत्वाच्छब्दनित्यत्ववादः ॥ १६६ ॥

प्रकृतौ लीनानां शब्दानां संसारे न प्रणाशो वासनानाम् इवान्तः-करणे ॥ १६७ ॥

॥ १३ ॥ द्विविधार्थनिरूपणम् ॥

अर्थो द्विविधः सन्बुद्ध्यपेक्षश्चेति ॥ १६८ ॥

योऽस्ति प्रपञ्चे स सन् ॥ १६९ ॥

कादम्बरीचन्द्रापीडादीनां कल्पितानामपि सद्वदुपचारात्सत्त्वम् ॥ १७० ॥

व्यवहारोपयोगी प्रत्ययमात्रप्रतिष्ठो बुद्ध्यपेक्षः ॥ १७१ ॥

द्रव्यं शक्तिर्गुणः कर्म चेति सन्तोऽर्थाः ॥ १७२ ॥

इतरे बुद्ध्यपेक्षाः ॥ १७३ ॥

॥ १४ ॥ व्यक्तिलक्षणम् ॥

सन्भावो व्यक्तिः ॥ १७४ ॥

निजवाचकनिर्दिष्टेषु भावान्तरेष्वभावे च व्यक्तिवदुपचारः ॥ १७५ ॥

॥ १५ ॥ आकृतिलक्षणम् ॥

जातिलिङ्गमाकृतिरेकेषाम् ॥ १७६ ॥

जातिराकृतिरन्येषाम् ॥ १७७ ॥

यया जातिर्जातिलिङ्गानि च प्रख्यायन्ते तामाकृतिं परे ॥ १७८ ॥

एषां जातिमतः सजातीयसङ्ग्राहकं स्वरूपलक्षणमाकृतिरित्युक्तं भवति ॥ १७९ ॥

पृथग्व्यक्तेः स्वरूपलक्षणं चेति वासिष्ठः ॥ १८० ॥

॥ १६ ॥ पदार्थविचारः ॥

*(नोपलभ्यते)*



Sri K. Natesan and Kavyakantha Ganapati Muni
A Sketch by Madam Jane Adams



Kavyakantha Ganapati Muni and his Family
A Sketch by Madam Jane Adams

# धर्मानुशासनम् (२)

## प्रथमोऽध्यायः

### ॥ १॥ शास्त्रारम्भः ॥

अथ धर्मानुशासनम् ॥ १॥

### ॥ २॥ धर्मलक्षणम् ॥

अपूर्वकारणानि द्रव्यगुणकर्माणि धर्म इत्यके ॥ २॥

धर्मस्य पुरुषार्थत्वात्तदलक्षणम् ॥ ३॥

स्वर्गादिसाधनत्वान्न साक्षात्प्रयोजनत्वमिति चेत् ॥ ४॥

प्रयोजनस्य प्रयोजनवत्त्वेन विरोधोऽर्थवत् ॥ ५॥

आत्मशक्त्युल्लासप्रतिबन्धकं दोषावरणमधर्मः ॥ ६॥

संस्करणेन तदपगमादात्मशक्त्युल्लासो धर्मः ॥ ७॥

धर्मस्य स्वयं फलप्रदत्वान्नापूर्वं कल्पनीयम् ॥ ८॥

## ॥ ३॥ धर्मसाधनम् ॥

धर्मः पुण्येन क्रमाद्वर्धते ॥ ९॥

प्रायः साकल्येन युगपन्नाविर्भवेत् ॥ १०॥

## ॥ ४॥ पुण्यलक्षणम्॥

उक्तं त्रेधा पुण्यस्य स्वरूपम् ॥ ११॥

सत्कर्म सद्वचनं सच्चिन्तनं चेति ॥ १२॥

त्रयो हि धर्मवर्धकास्ते भावाः ॥ १३॥

तेषु धर्मपदं भाक्तम् ॥ १४॥

पुण्येन त्रिविधं पापं व्याख्यातम् ॥ १५॥

असत्कर्मासद्वचनमसच्चिन्तनं चेति ॥ १६॥

तदन्यदेवस्वतःसिद्धाद्दोषावरणात् ॥ १७॥

बलकृद्दोषावरणस्य ॥ १८॥

क्वचिदन्वयतः साक्षात्पुण्यविशेषाणां निरूपणम् ॥ १९॥

क्वचिद्व्यतिरेकतः पापत्यागोपदेशद्वारा ॥ २०॥

तस्मात्पुण्यज्ञानाङ्गमेव पापज्ञानम् ॥ २१॥

## ॥ ५॥ पुण्यपापवित्तौ प्रमाणानि ॥

पुण्यपापवित्तौ प्रत्यक्षानुमानशब्दात्मादेशाः प्रमाणानि ॥ २२॥

आभ्यन्तरसदसत्संस्कारानुभूतिरत्र प्रत्यक्षम् ॥ २३॥

बाह्यशुभाशुभफललिङ्गमनुमानम् ॥ २४॥

अनैकान्तिकत्वेनेति यथाऽन्यत्र ॥ २५॥

धर्माधर्मयोरेवेति चेत् ॥ २६॥

तद्द्वारा पुण्यपापयोरित्यविरोधः ॥ २७॥

तपोबलादतीन्द्रियदर्शिनामृषीणामुपदेशः शब्दः ॥ २८॥

अन्तरात्मनो मनःसाक्षिण आदेश आत्मादेशः ॥ २९॥

## ॥ ६॥ शास्त्रीयविषयनिर्देशः ॥

पुण्यानां प्रमाणेनोपलभ्योपदेशः शास्त्रेऽस्मिन् ॥ ३०॥

पापानां च निषेधः ॥ ३१॥

तदुभयसम्बद्धं चान्यत् ॥ ३२॥

पुण्यानामुपदेशोऽन्वयतो धर्मानुशासनम् ॥ ३३॥

पापानां निषेधो व्यतिरेकतः ॥ ३४॥

तत्कारणानुशासने तदनुशासनाख्या भक्त्या ॥ ३५॥

## द्वितीयोऽधायः

### ॥ ७॥ वेदप्रमाण्यचर्चा ॥

### मीमांसकमतम्

वेदाः कर्त्रनुपलब्धेरपौरुषेयाः ॥ १॥

कारणाभावेन तद्दोषशङ्कानवकाशात्प्रमाणम् ॥ २॥

ज्ञानं हि स्वतः प्रमाणं कारणदोषावधारणं तत्प्रामाण्यापवादः॥ ३॥

अन्यथाऽनवस्था ॥ ४॥

शब्दस्योत्पत्तेर्नेति चेत् ॥ ५॥

अभिव्यक्तिरविद्ययोत्पत्तिरुच्यते ॥ ६॥

शब्दार्थसम्बन्धस्य कृत्रिमत्वात्पौरुषेया इति चेत् ॥ ७॥

असिद्धो हेतुर्व्यवहारस्यानादित्वात् ॥ ८॥

अर्थानामनित्यत्वान्नेति चेत् ॥ ९॥

शब्दानामाकृतिवाचकत्वाददोषः ॥ १०॥

व्यक्तिवाचका अपि दृश्यन्त इति चेत् ॥ ११॥

न ते वेदे ॥ १२॥

प्रावाहणिबबरादयः सन्तीति चेत् ॥ १३॥

तच्छ्रुतिसामान्यमात्रम् ॥ १४॥

प्रावाहणिर्बबरो वायुः ॥ १५॥

## मीमांसकमतखण्डनम्

पौरुषेयास्तु वाक्यरचनस्य पुरुषयत्नसापेक्षत्वात् ॥ १६॥

नामकरणात्कालभेदेन भेदाद्भाषाबाहुल्याच्च शब्दार्थसम्बन्धस्यासहजत्वावगतेः ॥ १७॥

वाक्यार्थस्य मतित्वात् ॥ १८॥

मधुच्छन्दःप्रभृतीनां कर्तॄणामुपलब्धेः ॥ १९ ॥

प्रवचनादाख्या इति चेत् ॥ २० ॥

अबाधेमुख्यार्थस्याहानम् ॥ २१ ॥

ऋषिरुच्यते न कविरिति चेत् ॥ २२ ॥

यस्य वाक्यं स ऋषिरिति प्रसिद्धेः पूजितकविपर्याय ऋषिः ॥ २३ ॥

वेदानां नित्यत्वादाख्या गौणत्वमिति चेत् ॥ २४ ॥

नित्यत्वाख्या गौणत्वकर्त्रनुपलब्धीनामितरेतराश्रयत्वभ्रमणाच्चक्रकम् ॥ २५ ॥

अत एवर्षयो मन्त्रद्रष्टार उच्यन्ते न मन्त्राध्यापकाः ॥ २६ ॥

मन्त्राणां दर्शनायोग्यत्वाद्गौणो व्यवहार इति चेत् ॥ २७ ॥

अविपर्यस्तबुद्धार्थापेक्षया ॥ २८ ॥

शब्दापेक्षया मन्त्रकृतः ॥ २९ ॥

नमो मन्त्रकृद्भ्य इति ब्राह्मणम् ॥ ३० ॥

सुकर्मपापमन्त्रपुण्येषु कृञ इति पाणिनिः ॥ ३१ ॥

वाचा विरूपनित्ययेति वचनप्रामाण्यान्नित्यत्वमिति चेत् ॥ ३२॥

नित्यत्वप्रमाणत्वयोरितरेतराश्रयः ॥ ३३॥

सततयेतित्वर्थोऽग्निस्तुतिप्रेरणस्य प्रकृतत्वात् ॥ ३४॥

नित्याग्निहोत्रादाविवार्थसङ्गतिः ॥ ३५॥

ऋषिणा विरूपेत्यात्मा सम्बोध्यत इति स्पष्टमार्षत्वम् ॥ ३६॥

विरूपनित्ययेत्येकं पदमिति चेत् ॥ ३७॥

न पृथक्पदपाठात् ॥ ३८॥

निगमेष्वन्यत्र चर्षीणामात्मसम्बोधनानि दृश्यन्ते ॥ ३९॥

इन्द्रं समर्येमहया वसिष्ठेति वसिष्ठस्य ॥ ४०॥

नोधः सुवृक्तिं प्रभरामरुद्भ्च इति नोधसः ॥ ४१॥

एवानुनमुपस्तुहि वैयश्व दशमं नवमिति वैयश्वस्य ॥ ४२॥

अनित्याख्या संवादकथादर्शनात् ॥ ४३॥

उक्तं तत्र तच्छ्रुतिसामान्यमात्रमितीति चेत् ॥ ४४०॥

परःसहस्रस्थलेषु रूढिप्रकरणतात्पर्यप्रयोगस्वभावाविरोधेन तथा व्याख्यातुमशक्यत्वादयुक्तिः ॥ ४५॥

दृष्टानि व्याख्यानानि वः प्रतिकूलानि ॥ ४६॥

विसंष्ठुलतयैख्या व्याख्यानेन न चारितार्थ्यम् ॥ ४७॥

प्रवाहणस्याप्रसिद्धत्वोक्तिरल्पदृष्ट्या ॥ ४८॥

स प्रसिद्धः पञ्चाग्निविद्याया उपदेष्टा ॥ ४९॥

वर्णात्मकशब्दनित्यत्वं सिद्धमपि प्रामाण्यस्याहेतुर्लौकिक-वैदिकयोरविशेषात् ॥ ५०॥

**पारमेश्वरत्ववादः**

ईश्वरस्य वाक्यानि वेदास्तस्मात्प्रमाणम् ॥ ५१॥

तस्माद्यज्ञात्सर्वहुत इति मन्त्रवर्णात्तदवगतिः ॥ ५२॥

अस्य महतो भूतस्य निःश्वसितमिति ब्राह्मणवाक्याच्च ॥ ५३॥

यो भागो यस्य द्वारा भूमाववतीर्णः स तस्यर्षिः ॥ ५४॥

एवमृषयो मन्त्रद्रष्टारः ॥ ५५॥

मन्त्रकृत उपचारात् ॥ ५६॥

ईश्वरेणर्षिः सम्बोध्यते चेन्नानुपपन्नम् ॥ ५७॥

ईश्वरस्य त्रिकालज्ञत्वादनित्याख्या संवादकथा दर्शनमविरुद्धम्॥ ५८॥

पुरुषविशेषत्वात्पौरुषेयत्वम् ॥ ५९॥

शाकलादीनां सङ्ग्राहकत्वेन संहिताकारत्वम् ॥ ६०॥

**पारमेश्वरत्ववादखण्डनम्**

न वा प्रागेव सिद्धे मन्त्रेऽर्वाचीनसम्बोधनस्यानुपपन्नत्वात् ॥ ६१॥

परिमितकालव्यक्त्याख्या संवादकथानामेव दर्शनात् ॥ ६२॥

मन्त्रे विश्वरूपस्य प्रकृतत्वात्सर्वस्य कार्यं तस्येति न साक्षादीश्वर-कार्यत्वसिद्धिः ॥ ६३॥

अन्यथाऽश्वादीनां च साक्षादीश्वरकार्यत्वप्रसक्तिः ॥ ६४॥

ब्राह्मणं च विश्वरूपस्य प्रकरणमवगम्यते ॥ ६५॥

अन्यथा पुराणेतिहासविद्याश्लोकसूत्रव्याख्यानानुव्यख्यानानां च साक्षादीश्वरकार्यत्वप्रसक्तिः ॥ ६६॥

मन्त्रब्राह्मणयोर्भाषास्वरूपभेदात् ॥ ६७॥

मन्त्रेषु च ऋग्यजुरथर्वाङ्गिरसाम् ॥ ६८॥

एकत्रैव मन्त्रे संहिताभेदेन वर्णभेदात् ॥ ६९॥

स्वरितभेदात् ॥ ७०॥

यावदेकर्षिनिगमेषु भाषाशैलीसादृश्यात् ॥ ७१॥

तद्भेदे तद्भेदात् ॥ ७२॥

वक्तृभेदपरिहार्येभ्यः पुनरुक्तिदोषेभ्यः ॥ ७३॥

देवतानां प्रत्यक्षस्तुतिभ्यः ॥ ७४॥

परार्थमिति चेत् ॥ ७५॥

परोक्षस्तुतिभिरेव चारितार्थ्यादनवसरः ॥ ७६॥

सचिवादिस्तुतिवदिति चेत् ॥ ७७॥

न हि त्वदन्यन्मघवन्न आप्यमित्यादौ भक्तेरनुपपत्तिः ॥ ७८॥

अश्वायन्तो मघवन्नित्यादावर्थित्वस्य ॥ ७९॥

मानो मर्ता अभिद्रुहन्नित्यादौ भयस्य ॥ ८० ॥

हृद्रोगं मम सूर्येत्यादौ रोगस्य ॥ ८१ ॥

एवमन्याश्चानुपपत्तयः ॥ ८२ ॥

अवोचाम रहूगणा अग्नये मधुमद्वचः ॥ ८३ ॥

तं त्वा वयं पतिमग्नेरयीणां प्रशंसामो मतिभिर्गोतमासः ॥ ८४ ॥

कुवित्पतिद्विषोयतीरिन्द्रेण सङ्गमामहै ॥ ८५ ॥

इत्यादौ प्रत्यक्षविधया ॥ ८६ ॥

तमुत्वागोतमो गिरा रायस्कामो दुवस्यति ॥ ८७ ॥

अयं वां कृष्णो अश्विना हवते ॥ ८८ ॥

तावां विश्वको हवते तनूकृथे ॥ ८९ ॥

शुनःशेपोऽह्यह्वद्गृभतिस्त्रिष्वादित्यं द्रुपदेषु बद्धः ॥ ९० ॥

श्यावाश्वस्ते सवितः स्तोममानशे ॥ ९१ ॥

तस्मा उ ब्रह्मवाहसे गिरो वर्धन्त्यत्रयः ॥ ९२ ॥

इत्यादौ परोक्षविधया च स्तुतिषु कर्तृपदस्य स्पष्टमृषिपरत्वात् ॥ ९३॥

अहं प्रत्नेन मन्मना गिरः शुम्भामि कण्ववदित्यादावौपम्यस्य अनुपपत्तेः ॥ ९४॥

प्रस्कण्वस्य श्रुधीहवमित्यादौ सम्बन्धस्य ॥ ९५॥

अहं राष्ट्री सङ्गमनी वसूनामित्यात्मस्तुतौ स्त्रीलिङ्गस्य ॥ ९६॥

अहं मनुरभवमित्यात्मस्तुतेर्वामदेव्यत्वस्य ॥ ९७॥

ये नानः पूर्वे पितरः पदज्ञा अर्चन्तो अङ्गिरसो गा अविन्दन्नित्यादावङ्गिरसां स्वपूर्वपितृत्वानुकीर्तनस्य ॥ ९८॥

दानस्तुतीनां च ॥ ९९॥

इन्द्राय ब्रह्म जनयन्त विप्रा इत्यादावृषिकार्यत्वोक्तेः ॥ १००॥

एवाते हरियोजना सुवृक्तीन्द्र ब्रह्माणि गोतमासो अक्रन् ॥ १०१॥

इन्द्र ब्रह्म क्रियमाणा जुषस्व याते शविष्ठ नव्या अकर्म ॥ १०२॥

एवाते गृत्समदाः शूरमन्मा वस्यवो न वयुनानि तक्षुः ॥ १०३॥

स्वायवो मतिभिस्तुभ्यं विप्रा इन्द्राय वाहःकुशिकासो अक्रन् ॥ १०४॥

अयं प्रियं शूषमिन्द्राय मन्म ब्रह्मकृतो बृहदुक्थादवाचि ॥१०५॥

इत्यादावृषीणां स्पष्टमात्मकृतित्वेन ख्यानात् ॥१०६॥

ब्राह्मणेष्वर्वाचीनजीवव्यक्त्युपदेशानामेव विद्यासु प्राय उपन्यस्तत्वात् ॥१०७॥

विविधाचार्यमतप्रदर्शनात् ॥१०८॥

मतभेददर्शनात् ॥१०९॥

शाखाभेदेन व्यवस्थार्थं भेदेनोपदेश इति चेत् ॥११०॥

तत्कण्ठरवेण वक्तव्यं न चोक्तम् ॥१११॥

असङ्गतिस्तत्र मतान्तरनिन्दायाः ॥११२॥

अर्वाचीनश्च शाखाभेदः ॥११३॥

शाखाभेदाद्धर्मस्वरूपं भिद्यत इति शपथमात्रम् ॥११४॥

अनृतकथाबाहुल्यात् ॥११५॥

विधिप्रशंसार्थवादा इति चेत् ॥११६॥

प्रभोर्वाक्येषु नैतादृशी कूटनीतिर्युक्ता ॥११७॥

व्याख्यानभेदात् ॥११८॥

बहुभक्तित्वाच्च ॥११९॥

सिद्धान्तः

आर्षदर्शनत्वान्निगमाः प्रमाणमिति वासिष्ठः ॥१२०॥

हृदयेन द्रष्टा ऋषिस्तदीयं दर्शनमार्षदर्शनम्॥१२१॥

धर्मातिशयात्तत्सिद्धिः ॥१२२॥

आर्षं सिद्धदर्शनं च धर्मेभ्य इति कणादः ॥१२३॥

हृदन्तरस्य परमस्य स्थानम् ॥१२४॥

तत्परमं व्योम ॥१२५॥

अणीयोपि महीयः ॥१२६॥

अभौतिकम् ॥१२७॥

करणं च परमस्य ॥१२८॥

परमे लीनस्यानिद्रितस्य जीवस्यापि स्यात् ॥१२९॥

हृत्पीठे दक्षिणतस्तदिति भगवान् रमणः ॥ १३० ॥

मनसस्तु मूर्धास्थानम् ॥ १३१ ॥

तदन्नमयम् ॥ १३२ ॥

हृन्मनश्चैकार्थे निघण्टोरिति चेत् ॥ १३३ ॥

हृदयमन्यन्मनसो निघण्टुस्तु भाक्तो जुष्टानि सन्तु मनसे हृदे चेत्यादौ भेदेन निर्देशात् ॥ १३४ ॥

अत एव हृदि विश मनसा स्वं चिन्वता मज्जतावेति भगवान् रमणः ॥ १३५ ॥

अभ्यासनिगृहीतेन मनसा हृदयाश्रयमिति कालिदासः ॥ १३६ ॥

यावदिन्द्रियैर्गृह्णाति तावन्मनसो विषयः ॥ १३७ ॥

अतीन्द्रियेष्वपि हृदयस्य गतिरन्तर्यामिकरणत्वात् ॥ १३८ ॥

स आनन्दमयः कोशो निद्रासमाध्योस्तत्रैव भवनात् ॥ १३९ ॥

मनोहृदयोर्मध्ये विज्ञानात्मायं जीवमाहुः ॥ १४० ॥

तस्य स्वभावतो मनःकरणम् ॥ १४१ ॥

हृदयं योऽन्तरात्मनि प्रतिष्ठां विन्देत् ॥ १४२ ॥

हृदयं स्वयं च पश्येन्मनःसहकृतैरिन्द्रियैश्च ॥१४३॥

पूर्वं ज्ञानमलौकिकम् ॥१४४॥

उत्तरं लोकसाधारणम् ॥१४५॥

तस्मान्निगमेषु लोकसाधारणाश्च प्रसङ्गाः ॥१४६॥

तेषामल्पप्रयोजनं प्रामाण्यं लौकिकप्रत्यक्षवत् ॥१४७॥

अलौकिकज्ञानस्य तु भूरि प्रयोजनम् ॥१४८॥

ऋषिभिर्वाक्यात्मना निबद्धान्यात्मदर्शनानि वेदाः ॥१४९॥

वेदरचने विशेषः

तन्निबन्धने समष्टेः शक्तिर्व्यष्टेर्व्युत्पत्तिश्च हेतुः ॥१५०॥

शक्तिव्युत्पत्तिजानि हि काव्यानि ॥१५१॥

शक्तेर्हार्दत्वात् व्युत्पत्तेश्च मानसत्वादयं विभागः ॥१५२॥

एतेन सर्वेषां दर्शनानामुज्ज्वलत्वे साम्यं भाषाशैलीभेदसादृश्ये च व्याख्यातानि ॥१५३॥

एवं शब्दतश्च काव्यरचनादिभद्यते वेदरचनम् ॥१५४॥

## निगमानां हार्दत्वे प्रमाणानि

ऋषीणां मन्त्रद्रष्टृत्वप्रसिद्धेर्निगमानामार्षदर्शनत्वावगतिः ॥१५५॥

हृदा यत्तष्टान्मन्त्राँ अशंसन् ॥१५६॥

एष वः स्तोमो मरुतो नमस्वान् हृदा तष्टः ॥१५७॥

इन्द्रं मतिर्हृद आवाच्यमानाऽच्छापतिं स्तोमतष्टा जिगाति ॥१५८॥

अहं तष्टेव बन्धुरं पर्यचामि हृदा मतिम् ॥१५९॥

हृदा तष्टेषु मनसो जवेषु यद्ब्राह्मणाः संयजन्ते सखायः ॥१६०॥

इत्यादयो निगमाश्चात्र भवन्ति ॥१६१॥

प्रमाणत्वार्षदर्शनत्वयोरितरेतराश्रय इति चेत् ॥१६२॥

न दोषः कर्तृसाक्ष्यार्षदर्शनयोर्भेदात्तवेव तस्माद्यज्ञादिति कर्तृसाक्ष्येश्वर-वाक्यत्वयोः ॥१६३॥

आप्तवाक्यमार्षदर्शनं च पृथगेव प्रमाणे वासिष्ठस्य ॥१६४॥

पूर्वं प्रत्यक्षानुमानसापेक्षमितरत्स्वतन्त्रमिति भेदात् ॥१६५॥

हृदयं मनःसहकृतैरिन्द्रियैर्यत्पश्येत्तत्प्रत्यक्षमेवेति चेत् ॥१६६॥

तत्रापि विशेषोऽस्ति साधारणप्रत्यक्षे दोषश्च सम्भाव्यो नोत्तरत्र हृच्छक्तिपूतत्वादक्षाणाम् ॥ १६७ ॥

दृष्टिभेदाद्वा ॥ १६८ ॥

पूर्वत्र दृश्ये जडबुद्धिरुत्तरत्र देवताबुद्धिर्हि ॥ १६९ ॥

एवं कर्तृसाक्ष्यमार्षदर्शनान्न भिद्यते प्रकृत इति चेत् ॥ १७० ॥

निगमा उभयविधं च प्रमाणं ग्राहकस्य मतिभेदादित्यविरोधः ॥ १७१ ॥

यावन्नार्षदर्शनत्वेन जानाति तावदाप्तवाक्यं तत् ॥ १७२ ॥

आप्तऋषिश्च न भवतु ऋषिराप्तश्च हि स्यात् ॥ १७३ ॥

यथा तवेश्वर आप्तश्च हि स्यात् ॥ १७४ ॥

प्रसिद्धेर्वा दर्शनत्वेऽवगतेदर्शनत्वात्प्रामाण्यमिति नेतरेतराश्रयः ॥ १७५ ॥

तदा बुद्धार्थपोषकान्युदाहरणानि ॥ १७६ ॥

**वेदानां पारमेश्वरत्वोपपत्तिः**

पारमेश्वरत्वप्रसिद्धिरप्यस्तीति चेत् ॥ १७७ ॥

एतत्पोषिकैव सा ॥ १७८ ॥

वेदाः काव्यानि वेधस उच्यन्ते करणस्य तदीयत्वात् ॥१७९॥

ऋषीणामुच्यन्ते तेषां द्रष्टृत्वात् ॥१८०॥

**वेदानामपौरुषेयत्वोपपत्तिः**

अपौरुषेयत्वप्रसिद्धिरप्यस्तीति चेत् ॥१८१॥

एतत्पोषिकैव सा ॥१८२॥

नास्ति हि निगमोत्पादने पुरुषस्य स्वातन्त्र्यम् ॥१८३॥

हार्दं दिव्यमित्यनर्थान्तरं हृद्धि द्यौः पुरुषस्य यत्राहंताच्युतिः ॥१८४॥

यद्दषिर्विश्वामित्रो भगवानिन्द्रं मतिर्हृद आवाच्यमानेत्युक्त्वाऽनन्तरायां दिवश्चिदापूर्व्या जायमानेत्याह तदत्र लिङ्गम् ॥१८५॥

एतेन दहरस्य ब्रह्मपुरत्वमुपनिषदुक्तं व्याख्यातम् ॥१८६॥

दहरो हि हृदो नातिरिच्यते ॥१८७॥

अलौकिकनित्यार्थापेक्षया पूर्व्यत्वम् ॥१८८॥

लौकिकोऽप्यर्थोऽस्तीति चेत् ॥१८९॥

मुख्यांशस्य पूर्व्यत्वविवक्षया न दोषः ॥१९०॥

## ॥ ८ ॥ वेदपदप्रवृत्तिनिमित्तम् ॥

ऋचो यजूंषि सामान्यथर्वाङ्गिरसश्च वेदाः ॥ १९१ ॥

वेदो निगमो मन्त्रो ब्रह्म चेत्येकार्थानि पदानि ॥ १९२ ॥

प्रामाण्ये गीतिनामसहकारित्वादृग्भिः सामानि गतार्थानीति चेत् ॥ १९३ ॥

न गाने धर्मविशेषात् ॥ १९४ ॥

वेदाः पवित्रभजनग्रन्थश्च न केवलं प्रमाणग्रन्थः ॥ १९५ ॥

## ॥ ९ ॥ ब्राह्मणानि ॥

ब्राह्मणानि च वेदा इत्येके ॥ १९६ ॥

नादर्शनत्वात् ॥ १९७ ॥

ऋगादिमात्रविशेषणेभ्यः ॥ १९८ ॥

मन्त्रपारायणस्यैव ब्रह्मयज्ञत्वात् ॥ १९९ ॥

भेदेन व्यपदेशाच्च ॥ २०० ॥

वेदानुबन्धित्वात्तेषां वेदाख्या भाक्ता ॥ २०१ ॥

## ॥ १० ॥ कर्मकाण्डम् ॥

तेषु कर्मकाण्डं देवताराधनकल्पग्रन्थः ॥ २०२ ॥

कर्तुमकर्तुमन्यथाकर्तुं वा शक्याः कल्पाः ॥ २०३ ॥

पवित्रमन्त्रावलम्बनत्वात्सत्यदेवतापरत्वाच्च तदुक्तकर्माणि श्रेयसे ब्राह्मणवाक्यप्रामाण्यात् ॥ २०४ ॥

## ॥ ११ ॥ उपनिषदः ॥

उपनिषद आचार्यपरम्पराप्राप्तरहस्यविद्यानिबन्धनग्रन्थाः ॥ २०५ ॥

ब्रह्माण्येवेशोपनिषत् ॥ २०६ ॥

उपनिषत्सादृश्यादुपनिषदाख्या ॥ २०७ ॥

उपनिषदां मूलमार्षदर्शनमिति तद्वत्प्रामाण्यम् ॥ २०८ ॥

निगमेषु द्रष्टार एव ग्रन्थकृत उपनिषत्सु परम्परोपदिष्टार्था इति विशेषः ॥ २०९ ॥

अर्वाचामवेदशाखानुबद्धास्तान्त्रिक्य उपनिषदः ॥ २१० ॥

तासां वेदशाखानुबद्धत्वोक्तिगौरवार्थं कल्पनावैभवम् ॥ २११ ॥

उपेक्ष्यास्ताः ॥ २१२॥

यावत्यो बादरायणेन विचारितास्तावतीनां वैदिकत्वेन ग्रहणं तस्य साकल्येन तन्मीमांसकत्वात् ॥ २१३॥

॥ १२॥ प्रमाणग्रन्थसङ्ग्रहः ॥

ऋक्सामाथर्वाङ्गिरसामेकैका मन्त्रसंहिता ॥ २१४॥

यजुषां द्वे शुक्ला कृष्णा चेति ॥ २१५॥

उत्तरा पञ्चकाण्डैव ग्राह्या ॥ २१६॥

ऋक्संहिताक्रमो ग्राह्यः ऋचामर्थविचारे ॥ २१७॥

ऋक्संहितापाठः पाठभेदेषु यथा दृष्टविचारे ॥ २१८॥

एतत्पञ्चकानुबद्धाः पञ्चैतरेयच्छान्दोग्यप्रश्नबृहदारण्यकतैत्तिरीयोपनिषदः ॥ २१९॥

केन कठमुण्डकमाण्डूक्यकौषीतिकिब्राह्मणोपनिषदः पञ्च खिलशाखानुबद्धाः ॥ २२०॥

पञ्चदशैते प्रमाणग्रन्थाः ॥ २२१॥

## तृतीयोऽध्यायः

### ॥ १३ ॥ वेदवाक्यप्रामाण्यपद्धतिविचारः ॥

पूर्वपक्षः

मन्त्रेषु भावार्थककर्मशब्दाभावान्न तैः क्रिया विधीयते ॥ १ ॥

स्पष्टं क्रियाविधायकः कर्मशब्दो भावार्थः ॥ २ ॥

भावश्च कस्यचिन्निष्पत्तिः ॥ ३ ॥

यजेतेत्यस्य यागेन किमपि भावयेदित्यर्थः स्यात् ॥ ४ ॥

तद्भाव्यं स्वर्गादिफलम् ॥ ५ ॥

ब्राह्मणेष्वेव तादृशभावशब्दाः ॥ ६ ॥

मन्त्राणां यथा शास्त्रं कर्मसु विनियोगात्सार्थक्यम् ॥ ७ ॥

प्रामाण्यं च कर्माङ्गदेवतादिप्रकाशकत्वात् ॥ ८ ॥

तस्मादभिधानवाची मन्त्रः ॥ ९ ॥

तस्य क्रियाङ्गत्वान्मन्त्राणां ब्राह्मणाङ्गत्वम् ॥ १० ॥

सिद्धान्तः

न वा मन्त्रेष्वपि भावार्थकदर्शनात् ॥ ११॥

शंसेदुक्थं सुदानव इत्यादौ शंसनस्य विधिः ॥ १२॥

इन्द्राय सामगायतेत्यादौ स्तुतस्य ॥ १३॥

मित्राय हव्यं घृतवज्जुहोतेत्यादौ होमस्य ॥ १४॥

न लिङ्लेट्तव्यान्यतमप्रयोगाभावाद्विधायकत्वमिति चेत् ॥ १५॥

लोटे विध्यर्थकत्वं शपथेन न निवार्यते ॥ १६॥

प्रथमपुरुषप्रयोगाभावान्नेति चेत् ॥ १७॥

स परोक्षविधयैष प्रत्यक्षविधया यथा लोके ॥ १८॥

ब्राह्मणेष्वपि सत्यं वदेत्यादयः प्रत्यक्षविधयो दृश्यन्ते ॥ १९॥

पूर्व आदेशः पर उपदेशः ॥ २०॥

तत्त्वानुशासनेष्वप्येतौ प्रकारौ दृश्येते ॥ २१॥

प्रज्ञानं ब्रह्मेत्यादेशस्तत्त्वमसीत्युपदेशः ॥ २२॥

देवताप्रकाशकत्वेन गतार्थकत्वात्पुनर्विधातुमशक्तिरिति चेत्॥ २३॥

अभिधानकर्मशब्दयोरन्योन्याविरुद्धा शक्तिः ॥ २४॥

वाक्यभेद इति चेत् ॥ २५॥

उद्देशमात्रतो देवताप्रकाशनं विधानतः क्रियाप्रतीतिरित्येकमेव वाक्यम् ॥ २६॥

प्रयोगसामर्थ्यात्प्रकाश्यस्य शेषोऽन्यत्पदजालमिति चेत् ॥ २७॥

न लैङ्गिकत्वाद्विनियोगस्य ॥ २८॥

मन्त्रैरिष्टानि साधयितुं ब्राह्मणस्थकर्मकल्पाः पुरुषाणाम् ॥ २९॥

न कर्मकल्पं पूरयितुं मन्त्राः ॥ ३०॥

सिद्धेषु मन्त्रेष्वनन्तरं हि कर्मकल्पाः प्रवृत्ताः ॥ ३१॥

मन्त्रेभ्योऽर्वाचीनत्वाद्ब्राह्मणानाम् ॥ ३२॥

मन्त्रव्याख्यानमन्त्रप्रमाणप्रदर्शनभाषा नवत्वादिभ्यस्तदवगतिः ॥ ३३॥

स्वार्थे स्वतन्त्रतया प्रवृत्तानामेव पवित्रततातिशयात्कर्मसु लिङ्गतः प्रयोगो मन्त्राणाम् ॥ ३४॥

ब्राह्मणश्रुत्यापीति चेत् ॥ ३५॥

सापि लैङ्गिकी ॥ ३६॥

ऐन्द्र्यागार्हपत्योपस्थानं विरुध्यत इति चेत् ॥ ३७॥

न प्रथममध्यमोत्तमज्योतिषां प्रतिनिधित्वात्त्रेतायाः ॥ ३८॥

एवं मन्त्राणां प्रामाण्यमार्षज्ञानानुवादित्वादेव न कर्माङ्गवस्तु-प्रकाशकत्वात् ॥ ३९॥

ब्राह्मणस्थकर्मविधीनां तु सत्यदेवतापवित्रमन्त्रावलम्बनत्वादेव न लिङ्लेट्तव्येभ्यः ॥ ४०॥

शब्दप्रमाणताहानेनानुमानप्रमाणतापत्तिरिति चेत् ॥ ४१॥

तदिष्टम् ॥ ४२॥

लौकिकवाक्यवदेव निगमवाक्यानां चार्थेषु गतिर्वाक्यस्वभाव-स्योभयत्र तुल्यत्वात् ॥ ४३॥

विनियोगकल्पनेष्वेव श्रुत्यादिपारदौर्बल्यं न प्रमेयावगताविति प्रामाण्यचर्चायामुपेक्ष्यम् ॥ ४४॥

इन्द्रगार्हपत्ययोः पृथग्देवताङ्गीकारे वा कदाचन स्तरीमसीत्यैन्द्री नाग्नेयी स्यात् ॥ ४५॥

स्याद्वचनसामर्थ्यादिति चेत् ॥ ४६ ॥

ऐन्द्र्येत्यनुवादोऽनुपपन्नः ॥ ४७ ॥

तदादेः प्रगाथस्यैन्द्रे शस्त्रे विनियोगश्च ॥ ४८ ॥

विनियोगविचारोऽन्यः प्रमेयविचारोऽन्यः ॥ ४९ ॥

पूर्वः क्रियोपकारकत्वविचार उत्तरोऽर्थविचारः ॥ ५० ॥

पूर्वस्योत्तरोऽङ्गमिति चेत् ॥ ५१ ॥

स्वतन्त्रः स्वसापेक्षस्य कथमङ्गं स्यात् ॥ ५२ ॥

प्रत्युतोपजीव्यो भवति ॥ ५३ ॥

पदाद्वाक्यैकदेशाद्वाक्याच्च प्रमेयलाभः ॥ ५४ ॥

वाक्यप्रकरणविरोधाभावे पदानां रूढितोऽर्थाः ॥ ५५ ॥

विरोधे योगतः ॥ ५६ ॥

ऋषीणामनेकत्वेऽपि दर्शनानामार्षत्वाविशेषादेकग्रन्थवद्विचारः ॥ ५७ ॥

वाक्यैकदेशवद्गुणवाक्यम् ॥ ५८ ॥

## चतुर्थोऽध्यायः

### ॥ १४ ॥ शब्दप्रमाणविचारशेषः ॥

भूते भव्ये चेति शब्दप्रमाणस्य गतिर्द्वेधा प्राचाम् ॥ १ ॥

सिद्धं वस्तु भूतम् ॥ २ ॥

साध्यं कर्म भव्यम् ॥ ३ ॥

पूर्वत्र वस्तुस्वरूपकथनम् ॥ ४ ॥

उत्तरत्र कर्तव्यत्वोपदेशः ॥ ५ ॥

तत्त्वज्ञानस्य मोक्षहेतुत्वात्सिद्धवस्तुस्वरूपकथनं प्रयोजनवदिति वेदान्तिनः ॥ ६ ॥

क्रियाङ्गवस्तुज्ञानं क्रियासम्पत्तये तस्मात्प्रयोजनवदिति मीमांसकाः ॥ ७ ॥

प्रयोजनवानर्थ एव वेदप्रतिपाद्य इत्युभये ॥ ८ ॥

भूतार्थवादस्य स्वार्थे प्रमाणत्वेऽपि न साक्षात्प्रयोजनवत्त्वं तस्मात्स च शेष इति तेषां दृष्टिः ॥ ९ ॥

सिद्धान्तः

शब्दप्रमाणस्यापि प्रमाणान्तरवत्प्रयोजनानपेक्षयैव गतिरिति वासिष्ठः ॥१०॥

प्रमातैव प्रमेयान्तरवच्छब्दप्रमेयेऽपि प्रयोजनं मृगयते ॥ ११॥

तत्रेतरापेक्षया तस्याधिकः प्रयोजनलाभ इति विशेषः ॥१२॥

आक्षेपः

नैवं शब्दप्रमाणान्तरयोर्भेदात् ॥१३॥

आप्तो हि दृष्टमर्थं यावत्प्रयोजनं ग्रन्थे निदध्यात् ॥१४॥

समाधानम्

नत्वेष नियमः कवीनाम् ॥१५॥

कवयो हि विशृङ्खलाः ॥१६॥

निगमाः काव्यवन्न तन्त्रवत् ॥१७॥

तन्त्रेषूक्तस्य पुनर्वचनं सर्वथा दोषाय ॥१८॥

काव्येषूक्तस्य भङ्ग्यन्तरेण पुनर्वचनं शोभायै ॥१९॥

# धर्मानुशासनम् (३)

## वासिष्ठस्मृतिः

### प्रथमोऽध्यायः

#### शास्त्रारम्भः

अथातो धर्मानुशासनम् ॥ १॥

#### धर्मलक्षणम्

अपूर्वकारणानि द्रव्यगुणकर्माणि धर्म इत्यके ॥ २॥

नेति वासिष्ठो धर्मस्यार्थकामवत्प्रयोजनत्वात् ॥ ३॥

स्वर्गादिसाधनत्वान्नेति चेत्प्रयोजनस्य प्रयोजनवत्त्वे न विरोधोऽर्थवत् ॥ ४॥

धर्मस्य स्वयं फलप्रदत्वान्नापूर्वं कल्पनीयं ॥ ५॥

आत्मशक्त्युल्लासप्रतिबन्धकं दोषावरणमधर्मः ॥ ६॥

संस्करणेन तदपगमादात्मशक्त्युल्लासो धर्मः॥ ७॥

स च पुण्येन क्रमाद्वर्धते ॥ ८॥

प्रायो न साकल्येन युगपदाविर्भवेत् ॥ ९॥

**पुण्यपापयोर्लक्षणे**

धर्मस्य वर्धको भावः पुण्यः ॥ १०॥

अधर्मस्य पापम् ॥ ११॥

पुण्येषु धर्मत्वव्यवहारो भाक्तः ॥ १२॥

यत्न विनैवांशतो धर्माधर्मौ मनुष्यस्य स्वतः सिद्धौ ॥ १३॥

यत्नतस्तदभिवृद्धिः ॥ १४॥

**पुण्यपापज्ञानविषये प्रमाणानि**

पुण्यपापज्ञानवित्तौ प्रत्यक्षानुमानशब्दात्मदेशाः प्रामाणानि ॥ १५॥

आभ्यन्तरसदसत्संस्कारानुभूतिरत्र प्रत्यक्षम् ॥ १६॥

बाह्यशुभाशुभफललिङ्गमनुमानम् ॥ १७॥

तपोबलादतीन्द्रियदर्शिनामृषीणामुपदेशः शब्दः ॥ १८॥

अन्तरात्मनो मनःसाक्षिण आदेश आत्मादेशः ॥ १९॥

शास्त्रीयविषयनिर्देशः

पुण्यानां पापानां वा प्रमाणेनोपलभ्योपदेशो निषधो वा शास्त्रे ॥ २० ॥

तदनुशासनमुच्यते ॥ २१ ॥

पुण्यानामुपदेशोऽन्वयतो धर्मानुशासनम् ॥ २२ ॥

पापानां निषेधो व्यतिरेकतः ॥ २३ ॥

तत्कारणानुशासने तदनुशासननाम लक्षणया ॥ २४ ॥

शास्त्रस्य स्मृतिनामसङ्गतिः

प्रमाणेनावगतिः स्मृतिरुच्यते ॥ २५ ॥

येषां शब्द एको धर्मे प्रमाणं तेषां तदर्थावगतिमात्रं स्मृतिः ॥ २६ ॥

तदनुवादे तन्नाम भाक्तम् ॥ २७ ॥

धर्मज्ञसमय एव स्मृतिरित्यापस्तम्बस्य दृष्टिः ॥ २८ ॥

तत्समयश्च प्रमाणद्वारा तदवगतार्थानुवादान्नातिरिच्यते ॥ २९ ॥

## मन्वादिस्मृतिस्वरूपचर्चा

मन्वादिस्मृतीनां शब्दवत्स्वतन्त्रं प्रामाण्यं स्मर्तृणां महिमातिशयाद् इत्येके ॥ ३० ॥

ताश्चेन्मन्वादीनामेवाभविष्यंस्तथैव प्रमाणमभविष्यन्निति वासिष्ठः ॥ ३१ ॥

ब्रह्मकोश एव सन्ति मन्वादीनां दर्शनानि ॥ ३२ ॥

स्मृतिभाषाभिन्ना तद्भाषातः ॥ ३३ ॥

अर्वाचीन नामविषयोपलम्भश्च तासु ॥ ३४ ॥

तस्मादनृषीणामर्वाचामेव मन्वादिस्मृतयः ॥ ३५ ॥

प्राचीननामाङ्कत्वं प्ररोचनार्थम् ॥ ३६ ॥

तद्विलक्षणं कृतिसमर्पणमात्मग्रन्थगौरवाय ॥ ३७ ॥

अदृष्टहेतुका प्रत्यक्षशब्दाविरुद्धा च स्मृतिस्तत्रापि प्रमाणं भवति ॥ ३८ ॥

तच्च प्रामाण्यं सर्वासु स्मृतिषु शब्दस्यानुमापकत्वादिति जैमिनिः ॥ ३९ ॥

सामान्यतः प्रमाणेनावगतेरिति वासिष्ठः ॥ ४० ॥

## द्वितीयोऽध्यायः

### परमपुरुषार्थविचारः

परमः पुरुषार्थो निःश्रेयसं कणादस्य भाषायाम् ॥ १॥

अपवर्गोऽक्षपादस्य ॥ २॥

मोक्षः कपिलस्य ॥ ३॥

कैवल्यं पतञ्जलेः ॥ ४॥

सम्पद्बादरायणस्य ॥ ५॥

स्वर्गो जैमिनेः ॥ ६॥

अमृतत्वं वासिष्ठस्य ॥ ७॥

तत्स्वरूपनिरूपणे चास्ति मतिभेदः ॥ ८॥

अविच्छिन्नस्मृतिनित्यव्यक्तित्वप्राप्तिस्मृतत्वम् ॥ ९॥

पृथग्व्यक्तित्वप्रणाशेनेश्वरसायुज्यं परमः पुरुषार्थ एकेषाम् ॥ १०॥

तदानीमात्मविनाशप्रसङ्गः ॥ ११॥

समुद्रे कुल्यावदैक्येऽपि न स्वरूपप्रणाश इति चेत् ॥ १२॥

पृथग्घृदयाज्जीवस्वरूपं नातिरिच्यते ॥ १३ ॥

ऐक्ये हृदयनाशे जीवनाशः ॥ १४ ॥

हृदयसद्भावे पृथग्व्यक्तित्वं न प्रणष्टं स्यात् ॥ १५ ॥

अभेदश्रुतिविरोध इति चेत् ॥ १६ ॥

अभेदानुभवसिद्धेरविरोधः ॥ १७ ॥

भेदेन सद्भावे कथमभेदानुभव इति चेत् ॥ १८ ॥

तदैव तदनुभवो भेदमूलत्वादभेदबुद्धेः ॥ १९ ॥

तात्त्विकादभेदाच्चाविरोधः ॥ २० ॥

भेदेन सद्भावे कथं तात्त्विकाभेद इति चेत् ॥ २१ ॥

बिम्बप्रतिबिम्बवदुभयसङ्गतिः ॥ २२ ॥

दुःखप्रणाशमात्रं परमः पुरुषार्थ एकेषाम् ॥ २३ ॥

दुःखप्रणाशे सुखमेव शिष्येतेति चेन्न द्वन्द्वानूभूतीनामन्योन्यसापेक्षत्वात् ॥ २४ ॥

दुःखसहनशक्तिरेवानवधिरमृतत्वे न दुःखप्रणाश इति वासिष्ठो जीवन्मुक्तेष्वपि दुःखवेदनोपलम्भात् ॥ २५ ॥

शरीरसम्बन्धादिति चेदमृतस्य देहापायादनन्तरमप्यस्ति सूक्ष्म-शरीरम् ॥ २६॥

स्थूलपरस्तत्र शरीरनिषेधः ॥ २७॥

सर्वथा शरीराभावे हृदयाभावः ॥ २८॥

हृदयाभावे जीवव्यक्तेरेवाभावः ॥ २९॥

तदभावे कस्य पुरुषार्थः ॥ ३०॥

बौद्धानामिव निर्वाणमेव परमः पुरुषार्थो भवत्विति चेत्सत ईश्वरस्य तदभावाद्बद्धत्वप्रसङ्गः ॥ ३१॥

यथा दुःखसहनशक्तिरनवधिस्तथा सुखभोगशक्तिश्चामृतस्य ॥ ३२॥

करुणादयो भावास्तत्र दुःखहेतवः ॥ ३३॥

दुःखसद्भावे निरतिशयानन्दहानिरिति चेत् ॥ ३४॥

मैवमानन्दस्य सुखविलक्षणत्वात् ॥ ३५॥

प्रतिकूला वेदना दुःखम् ॥ ३६॥

अनुकूला सुखम् ॥ ३७॥

पूर्णोऽनुभूतिरस आनन्दः ॥ ३८॥

नित्यात्सर्वानुभवपर्यवसानस्थादभेदानुभवात्स नातिरिच्यते ॥ ३९ ॥

तस्यैव तात्कालिकाविर्भावात्संसारिणामपि नाटकेषु शृङ्गार-करुणयोस्तुल्यो रसानुभवः ॥ ४० ॥

शाश्वतब्रह्मलोकप्राप्तिः परमः पुरुषार्थ एकेषाम् ॥ ४१ ॥

तत्तल्लोकप्राप्तिः शरीरविशेषसापेक्षा परमः पुरुषार्थोऽनुभव एव कश्चित्तस्मान्नास्ति तस्य लोकनियम इति वासिष्ठः ॥ ४२ ॥

आनन्दस्य तुल्यत्वेऽपि शरीरविशेषवशात्पाकतारतम्यवशाच्च सिद्धितारतम्यममृतानाम् ॥ ४३ ॥

**धर्मामृतत्वयोः सम्बन्धः**

लेशतोऽपि दोषावरणरहिताद्धर्मातिशयादमृतत्वम् ॥ ४४ ॥

## तृतीयोऽध्यायः

### दोषावरणविचारः

दोषावरणं पाशो ग्रन्थिश्चेत्यनर्थान्तरम् ॥ १ ॥

प्रकृत्या पाशत्रयबद्धो जीवः ॥ २ ॥

त्रिधा बद्धो वृषभो रोरवीतीति निगमोऽत्र भवति ॥ ३ ॥

मनोमयप्राणमयान्नमयेषु ॥ ४॥

उत्तममध्यमाधमसंज्ञास्ते पाशाः ॥ ५॥

उदुत्तमं मुमुग्धिनो विपाशं मध्यमं चृत अवाधमानि जीवस इति निगमोऽत्र भवति ॥ ६॥

आज्ञाचक्रे रुद्रग्रन्थिर्मणिपूरे विष्णुग्रन्थिर्मूलाधारे ब्रह्मग्रन्थिरिति तान्त्रिकाः ॥ ७॥

एते स्थूला अधमपाशविशेषा इति वासिष्ठः ॥ ८॥

मन्त्रेऽधमानीति बहुवचनादिदमुक्तिः ॥ ९॥

विषयाशा मध्यमः पाशः ॥ १०॥

इयं मनःसम्बन्धिनीत्येके ॥ ११॥

प्राणस्यैव मनसि प्रतिबिम्बिता भवतीति वासिष्ठः ॥ १२॥

अहङ्कार उत्तमः पाशः ॥ १३॥

शरीरमानित्वमहङ्कारः ॥ १४॥

अयमन्तःकरणविशेष इत्येके ॥ १५॥

मनसो मूलवृत्तिरिति भगवान् रमणः ॥ १६॥

स बाह्यशक्तिप्रवेशप्रतिबन्धको दृढः कवाटबन्धः ॥ १७ ॥

**पाशमोक्षोपायविचारः**

ध्रुवा स्मृतिः साक्षात्सर्वपाशमोक्षोपायः ॥ १८ ॥

अन्यानि पुण्यानि परम्परया ॥ १९ ॥

अन्यैः पुण्यैश्चित्ते शुद्धे स्मृतिर्हि ध्रुवा स्यात् ॥ २० ॥

सत्त्वशुद्धौ ध्रुवा स्मृतिः स्मृतिलम्भे सर्वग्रन्थीनां विप्रमोक्ष इति श्रुतिरत्र भवति ॥ २१ ॥

सत्त्वमन्तःकरणान्नातिरिच्यते ॥ २२ ॥

आहारशुद्धिरेकैवालं सत्त्वशुद्धये तच्छ्रुत्येति चेत् ॥ २३ ॥

आहारोऽत्र सर्वेन्द्रियसम्बन्धिविवक्षितस्तस्माद्विशालं वचनम् ॥ २४ ॥

**ध्रुवस्मृतिस्वरूपम्**

नित्यमप्रमादेनात्मनो धृतिर्ध्रुवा स्मृतिः ॥ २५ ॥

क्रियासु कर्तुः ॥ २६ ॥

विषयानुभूतिषु विषयिणः ॥ २७ ॥

सङ्कल्पेषु सङ्कल्पयितुः ॥ २८॥

विश्रान्तौ केवलस्य ॥ २९॥

पूर्वे त्रयो योगाः ॥ ३०॥

उत्तरा निष्ठाः ॥ ३१॥

अभ्यस्यमाना ध्रुवा स्मृतिरुपायः ॥ ३२॥

सिद्धा तु स्वयमेव फलं स्यात् ॥ ३३॥

त आत्मज्ञानं नातिरिच्यते ॥ ३४॥

शास्त्रीयमात्मज्ञानमन्यत् ॥ ३५॥

## चतुर्थोऽध्यायः

### तत्त्वज्ञानस्यावश्यकत्वम्

तत्त्वमविज्ञाय कृतं पुण्यमल्पफलं स्यात् ॥ १॥

न प्राप्येत योगः कुतो निष्ठा ॥ २॥

तस्माच्छास्त्रीयं च तत्त्वज्ञानमावश्यकम् ॥ ३॥

एकवस्तुप्रतिपादनम्

द्रव्यगुणकर्मसामान्यविशेषसमवायाभावाः सप्तपदार्था इति तार्किकाः ॥ ४॥

तेषु सामान्यादयश्चत्वारो बुद्ध्यपेक्षाः पदार्थाः ॥ ५॥

वस्तुतो न सन्तीत्युक्तं भवति ॥ ६॥

साधर्म्यमेव नामान्तरेण सामान्यम् ॥ ७॥

वैधर्म्यं विशेषः ॥ ८॥

यत्केषाञ्चित्साधर्म्यं तदेवेतरैर्वैधर्म्यं स्यादित्येकस्यैव सामान्यत्वं विशेषत्वं च भवतीति तयोर्बुद्ध्यपेक्षत्वम् ॥ ९॥

तयोः स्वतः सिद्धपदार्थत्वे कथमितरेतरभावः ॥ १०॥

सत्तैव जातिरन्त्यो विशेष एव विशेषस्तस्मान्नास्तीतरेतरभाव इति चेत् ॥ ११॥

द्रव्यत्वादेर्व्यावर्तकत्वासङ्गतिः ॥ १२॥

तत्राप्यन्त्यविशेषा एव व्यावर्तका इति चेत् ॥ १३॥

तत्रान्त्यविशेषानुभूतिप्रसङ्गः ॥ १४॥

तेषामनुमानतः प्रतीतिरिति चेत् ॥ १५॥

द्रव्यत्वे गुणत्वात्कर्मत्वाच्च व्यावर्तकानि बहूनि परमाणुत्वानि प्रतीयेरन् ॥ १६॥

सदृशाकृतिप्रतिष्ठं साधर्म्यं विसदृशाकृतिप्रतिष्ठं वैधर्म्यं तस्मान्न तयोः पृथक्प्रतिष्ठा ॥ १७॥

अंशतः साधर्म्यमंशतो वैधर्म्यं च वस्तुषु नानुपपन्ने ॥ १८॥

स्वरूपसम्बन्धतः सिद्धौ समवायकल्पनानर्थक्यम् ॥ १९॥

अविभक्तस्य व्यावहारिकविभजने हेतुनिसर्गविशेषः स्वरूप-सम्बन्धः ॥ २०॥

अनेकस्वरूपाणां सम्बन्धत्वकल्पने गौरवाल्लाघवे नैकः समवायो-ऽङ्गीक्रियतामिति चेत् ॥ २१॥

व्यवहार एव गौरवलाघवविचारो न वस्तुपरीक्षायाम् ॥ २२॥

तस्मादस्तु शास्त्रे समवायः केवलं व्यावहारिकः ॥ २३॥

व्यवहारश्च कल्पनवैभवं बुद्धेः ॥ २४॥

अभावस्य व्यवहारत एव पदार्थत्वं न स्वतः ॥ २५॥

कस्यचिद्देशतः कालते वा व्याप्यत्वं व्यतिरेकादभाव उच्यते ॥ २६॥

कयोश्चिन्नित्यं पार्थक्यं वा ॥ २७॥

एवं द्रव्यगुणकर्माणि त्रय एव भावाः स्वतःसिद्धा इत्याचार्याः ॥ २८॥

एकमेव यत्किञ्चित्स्वरूपं भाव इति भगवान् रमणः ॥ २९॥

तत्सदुच्यते ॥ ३०॥

सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयमिति श्रुतिरत्र भवति ॥ ३१॥

स आत्मोच्यते ॥ ३२॥

आत्मा वा इदमग्र आसीदिति श्रुतिरत्र भवति ॥ ३३॥

# धर्मानुशासनम् (४)

## प्रथमोऽध्यायः

### ॥ १॥ शास्त्रारम्भः ॥

अथातो धर्मानुशासनम् ॥ १॥

स साधनफलविरोधिनो धर्मस्य प्रमाणोपलब्धस्योपदेशो धर्मानुशासनम् ॥ २॥

### ॥ २॥ धर्मलक्षणम् ॥

कायप्राणमनसामलौकिकः संस्कारो धर्मः ॥ ३॥

अभ्युदयनिःश्रेयससाधकः स्वयं च पुरुषार्थः ॥ ४॥

प्रयोजनस्य प्रयोजनवत्त्वे न विरोधोऽर्थवत् ॥ ५॥

धर्मसाधनानां कर्मवृत्तोपासनानां धर्माख्योपचाररूढेः ॥ ६॥

### ॥ ३॥ धर्मभेदाः ॥

आश्रयत्रैविध्याद्धर्मस्त्रेधा ॥ ७॥

सर्वनाडीप्रसारिण्यन्तस्तेजोलहरी कायिको धर्मः ॥ ८ ॥

सा कुण्डलिनीशक्तिस्तान्त्रिकाणां भाषायाम् ॥ ९ ॥

तेजसस्तस्य स्थानं नाभिमण्डले ॥ १० ॥

अधोनिष्ट्यावितस्त्यान्त इत्याद्युपदेशोऽत्र भवति ॥ ११ ॥

हृदयस्य प्राक् प्रस्तुतत्वान्नेति चेत् ॥ १२ ॥

तस्मादेवाधोनिष्ट्यावितस्त्यान्त इत्यन्वयः ॥ १३ ॥

हृदयवादिना नाभ्यामिति सप्तम्याः पञ्चम्यर्थो वक्तव्यस्तद्विसंष्ठुलम् ॥ १४ ॥

सोऽग्रभुग्विभजन्स्तिष्ठन्नाहारमिति निर्देशादितोऽपि स्पष्टं नाभिस्थानं प्रतीयते ॥ १५ ॥

एकस्थानस्थस्य सर्वशरीरव्यापित्वं सूक्ष्मज्वालाद्वारा ॥ १६ ॥

सन्तापयति स्वं देहमापादतलमस्तक इत्युपदेशोऽत्र भवति ॥ १७ ॥

कायसंस्कारसिद्धेरनन्तरमेव सा स्थितिः ॥ १८ ॥

अलौकिकशक्तिः प्राणिको धर्मः ॥ १९ ॥

ध्रुवा स्मृतिर्मानसिकः ॥ २० ॥

केवलस्येष्टदेवतात्मकस्य लक्ष्यस्य केवलस्यात्मनः स लक्ष्यास्यात्मनो वा ॥ २१॥

पूर्वा धारणोच्यते ॥ २२॥

अनन्तरा निष्ठा ॥ २३॥

उत्तराऽन्तरङ्गसेवा ॥ २४॥

*(धारणान्तरङ्गसेवयोः समानं नाम तपः)*

उपासनमानसिकधर्मयोरविशेषापत्तिरिति चेत् ॥ २५॥

अभ्यस्यमानं साधनं नित्यसिद्धं धर्म इति विशेषः ॥ २६॥

**धर्मज्ञाने प्रमाणम्**

धर्मज्ञाने स्वानुभूतिः प्रमाणम् ॥ २७॥

ब्रह्मवर्चसेनानुमेया चान्तस्तेजोलहरी ॥ २८॥

शरीरस्यापूर्वं सुवर्णज्योतिर्ब्रह्मवर्चसम् ॥ २९॥

# धर्मानुशासनम् (५)

## वासिष्ठदर्शनम्

### प्रथमोऽध्यायः

॥ १॥ शास्त्रारम्भः ॥

अथातो धर्मानुशासनम् ॥१॥

॥ २॥ धर्मलक्षणम् ॥

शरीरप्राणमनसामलौकिकः संस्कारो धर्मः ॥२॥

अभ्युदयनिःश्रेयससाधकः स्वयं च पुरुषार्थः ॥३॥

प्रयोजनस्य प्रयोजनवत्त्वे न विरोधोऽर्थवत् ॥४॥

धर्मसाधनानां कर्मवृत्तोपासनानां धर्माख्योपचाररूढेः ॥५॥

॥ ३॥ धर्मभेदाः ॥

आश्रयत्रैविध्याद्धर्मस्त्रेधा ॥६॥

ब्रह्मवर्चसं शारीरो धर्मः ॥ ७॥

द्वन्द्वसहिष्णुता प्राणिकः ॥ ८॥

सा तितिक्षोच्यते ॥ ९॥

दुःखसहनवत्सुखसहनस्य यत्नसाध्यत्वं नेति चेत् ॥ १०॥

सुखसहनमत्र सुखस्यावशंवदत्वम् ॥ ११॥

ध्रुवा स्मृतिर्मानसिको धर्मः ॥ १२॥

**॥ ४॥ धर्मज्ञानप्रमाणम् ॥**

धर्मज्ञाने स्वानुभूतिः प्रमाणम् ॥ १३॥

**॥ ५॥ धर्मातीन्द्रियत्वम् ॥**

एवमपि धर्मस्यातीन्द्रियत्वमात्मवत् ॥ १४॥

तितिक्षाध्रुवस्मृत्योरतीन्द्रियत्वमविवादम् ॥ १५॥

ब्रह्मवर्चसं चातीन्द्रियम् ॥ १६॥

तेजस्त्वान्नेति चेदबाह्यत्वादविरोधः ॥ १७॥

सिद्धेरनन्तरं नित्यं शरीरान्तरसञ्चार्यलौकिकं ज्योतिर्ब्रह्मवर्चसम्॥ १८॥

तत्कुण्डलिनीशक्तिविजृम्भणमाहुस्तान्त्रिकाः ॥ १९॥

बाह्यस्यातीन्द्रियज्योतिषोऽवतरन्नंश इत्येके ॥ २०॥

इयं विजृम्भमाणा तं च सजातीयमवतारयेदिति वासिष्ठः ॥ २१॥

शारीराज्ज्योतिषः कुण्डलिनीशक्तिर्नातिरिच्यते ॥ २२॥

शारीरं ज्योतिश्च सोऽग्रभुगित्यादिनोपदिष्टोऽग्निः ॥ २३॥

बाह्याद्विलक्षणतेजोविशेषाद्ब्रह्मवर्चसमनुमातुं शक्यमिति चेत्तदिष्टम् ॥ २४॥

## अथ द्वितीयोऽध्यायः

### ॥ ६॥ परमपुरुषार्थविचारः ॥

पृथग्व्यक्तित्वप्रणाशेनेश्वरसायुज्यं परमः पुरुषार्थ एकेषाम् ॥ १॥

तदानीमात्मविनाशप्रसङ्गः ॥ २॥

समुद्रे कुल्यावदैक्येऽपि न स्वरूपप्रणाश इति चेत् ॥ ३॥

पृथग्घृदयाज्जीवस्वरूपं नातिरिच्यते ॥ ४॥

ऐक्ये हृदयनाशे जीवनाशः ॥ ५॥

हृदयसद्भावे पृथग्व्यक्तित्वं न प्रणष्टं स्यात् ॥ ६॥

अभेदश्रुतिविरोध इति चेदभेदानुभवसिद्धेरविरोधः ॥ ७॥

भेदेन सद्भावे कथमभेदानुभव इति चेत्तदैव तदनुभवो भेदमूलत्वाद् अभेदबुद्धेः ॥ ८॥

अभेदस्य तात्त्विकत्वादनुभूतेर्न भावनामात्रत्वम् ॥ ९॥

# धर्मानुशासनम् (६)

## प्रथमोऽध्यायः

॥ १॥ शास्त्रारम्भः ॥

अथातो धर्मानुशासनम् ॥ १॥

॥ २॥ धर्मलक्षणम् ॥

यतोऽभ्युदयनिःश्रेयससिद्धिः स धर्म इति कणादः ॥ २॥

अभ्युदयः सुखमित्येके ॥ ३॥

स्वर्ग इत्यन्ये ॥ ४॥

तत्त्वज्ञानमित्यपरे ॥ ५॥

आद्ययोः पक्षयोर्यतोऽभ्युदयसिद्धिः स प्रवृत्तिलक्षणो धर्मः ॥ ६॥

यतो निःश्रेयससिद्धिः स निवृत्तिलक्षणः ॥ ७॥

उत्तरस्मिन्पक्षे तत्त्वज्ञानद्वारकं निःश्रेयसं यतः स धर्म इति व्याख्यानम् ॥ ८॥

अत्र मते निवृत्तिलक्षण एक एव धर्मः सर्वा च प्रवृत्तिर्दोषः ॥ ९॥

अभ्युदयः सुखं चेद्धनवनितादेरपि धर्मत्वं ततः सुखसिद्धेः ॥ १०॥

स्वर्गश्चेद्यत इहैव फलप्राप्तिः स धर्मो न सङ्गृहीतः स्यात् ॥ ११॥

शब्दशक्तिमतिलङ्घ्य कल्पित्वादुत्तरोऽर्थ उपेक्षणीयः ॥ १२॥

चोदनालक्षणोऽर्थो धर्म इति जैमिनिः ॥ १३॥

प्रवर्तकं वैदिकं वाक्यं चोदना ॥ १४॥

यः श्रेयसा संयुनक्ति सोऽर्थः ॥ १५॥

चोदनया लक्ष्यते योऽर्थः स धर्म इत्युक्तं भवति ॥ १५॥

प्रयोजनपर एवार्थशब्दो न प्रयोजनवत्पर इति चेल्लक्षणया ॥ १७॥

श्येनादेर्वारणायार्थ इति ॥ १८॥

अनधिकारित्वाद्वैदिकधर्मदविष्ठेषु शूद्रादिष्वपि धर्मदर्शनादवैदिकोऽपि धर्मोऽस्तीति प्रतीयते तस्माल्लक्षणमपूर्णम्॥ १९॥

प्रतिज्ञायते हि भवता शूद्रमुद्दिश्यावैद्यत्वादभावः कर्मणि स्यादिति ॥ २०॥

अस्ति तस्य स्मार्तः कोऽपि धर्म इति चेत् ॥ २१॥

तस्यावैदिकत्वे लक्षणस्यापूर्णत्वम् ॥ २२॥

वेदमूलत्वाङ्गीकारे शूद्रस्य वैदिकधर्माधिकारप्रसङ्गः ॥ २३॥

अग्न्याधेयपूर्वकेष्वेव कर्मसु प्रतिषेधो न सर्वत्रेति चेत् ॥ २४॥

सन्ध्योपासनादिकर्माधिकारप्रसङ्गः ॥ २५॥

तदर्था च प्रसज्येत विद्या ॥ २६॥

स मन्त्रकेषु प्रतिषेधोऽन्यत्राभ्यनुज्ञानमिति चेत् ॥ २७॥

मधुविद्याद्युपासनाधिकारप्रसङ्गः ॥ २८॥

तदर्था च प्रसज्येत विद्या ॥ २९॥

# धर्मानुशासनम् (७)

## प्रथमोऽध्यायः

### ॥ १॥ शास्त्रारम्भः ॥

अथातो धर्मानुशासनम् ॥ १॥

### ॥ २॥ धर्मलक्षणम् ॥

यतोऽभ्युदयनिःश्रेयससिद्धिः स धर्म इति कणादः ॥ २॥

फलोत्पत्तेः प्रागनेन लक्षणेन धर्मो न विज्ञायते ॥ ३॥

चोदनालक्षणोऽर्थो धर्म इति जैमिनिः ॥ ४॥

चोदना वेदश्चेत्पूर्णं वेदाध्ययनं विना धर्मलक्षणं साकल्येन न विज्ञायेत धर्मविशेषाणामेव लक्षितत्वात् ॥ ५॥

शब्दत एवेदं सामान्यलक्षणं न ह्यर्थतश्चोदनानाममितत्वात् ॥ ६॥

खिलवेदानां च चोदनाशब्दतः सङ्ग्रहणाद्दुर्विज्ञेय त्वं च लक्षकैक-देशस्य ॥ ७॥

अपूर्वं चेद्द्रव्यं वा गुणो वा कर्म वा ॥ ८॥

गुणश्चेत्तदाश्रयद्रव्यं वक्तव्यं न चोच्यते ॥ ९॥

# धर्मानुशासनम् (८)

## प्रथमोऽध्यायः

अथातो धर्मानुशासनम् ॥ १॥

सामान्यवाचकेषु पुंलिङ्गं स्त्रीणामप्युपलक्षकमन्यत्र विवाहप्रकरणात् ॥ २॥

ब्राह्मणक्षत्रियवैश्यशूद्राश्चत्वारो वर्णा इत्याचार्याः ॥ ३॥

जन्मायत्तं वर्णत्वमित्येके ॥ ४॥

गुणकर्मायत्तं वर्णत्वमित्यपरे ॥ ५॥

गुणकर्मायत्तमेव वर्णत्वं तन्नियमेन जातिषु विभेजिरे पूर्वे राजानः सपुरोहिताः शासनैरिति वासिष्ठः ॥ ६॥

सङ्क्षेमानुसारिणो वृत्तिभेदाः पृथग्विधं गुणानुसारि धर्माचरणं चेति वर्णभेदमूलम् ॥ ७॥

ब्राह्मणोऽस्येति मन्त्रलिङ्गाज्जन्मैवेति चेत् ॥ ८॥

विराडुपासनार्थं ब्राह्मणादिमुखाद्योरभेदस्यैव तत्र प्रतिपादनात्तद् अलिङ्गम् ॥ ९॥

चतुर्थेपादे जन्मनः स्पष्टोक्तेः पूर्वेषु कार्यकारणाभेद इति चेत् ॥ १०॥

न प्रश्नानुसारिणैवोत्तरस्य भाव्यत्वात् ॥ ११॥

पद्भ्यामिति तादर्थ्ये चतुर्थी नापादने पञ्चमी ॥ १२॥

सर्वेषां च मानवत्वान्न पारमेश्वरत्वसङ्गतिः ॥ १३॥

बहूनां राज्ञां ब्राह्मणीभावेन ब्राह्मणगोत्रकृत्वेन जन्मवादस्य भाक्तत्वमङ्गीकार्यम् ॥ १४॥

पतितानां ब्राह्मणत्वादिच्युतेश्च ॥ १५॥

जात्यायत्तवर्णव्यवस्थायां धर्माचरणे विद्यायां च सुतरामल्पादवकाशा-न्निर्बन्धदास्याच्च चतुर्थो नीचैरभूत्तेन वर्णभेदः पापविद्धोऽभूत् ॥ १६॥

पूर्वेष्वपि तारतम्यबुद्धिव्यापनाच्च ॥ १७॥

लोकानुपघातेनेष्टया वृत्त्या जीवने धर्मस्येष्टस्याचरणे च व्यक्तिस्वातन्त्र्य-स्यापहारको जात्यायत्तवर्णभदो धर्ममूलसूत्रविरोधी च भवति ॥ १८॥

तस्मात्स प्रत्याख्येयः ॥ १९॥

जात्यायत्तवर्णव्यवस्था शास्त्रस्य सामयाचारिकत्वात्परिणाम-सहत्वम् ॥ २०॥

गुणकर्मायत्ते वर्णत्वैकस्य बहुवर्णत्वापत्तिः कालभेदेन गुणकर्मभेद-दर्शनादिति चेत्तदिष्टम् ॥ २१॥

नैसर्गिकवर्णलक्षणस्य प्रकृतिधर्मत्वात्प्रकृतेश्च परिणामवत्त्वात् ॥ २२॥

ब्राह्मणादिव्यवहारासौकर्यमिति चेन्मास्तु भेदेन व्यवहारो बह्वनर्थ-मूलत्वात् ॥ २३॥

वैदिक इति सर्वस्य वेदमतानुयायिनस्तुल्यं नामेष्टम् ॥ २४॥

अविशेषेण सर्वस्य वैदिकस्य गायत्र्योपनयनसंस्कारः ॥ २५॥

तुल्यो वेदाध्ययनाधिकारो वैदिककर्माधिकारश्च ॥ २६॥

आत्मज्ञानमेव वस्तुतः संस्कारः ॥ २७॥

# धर्मानुशासनम् (९)

## प्रथमो वर्णभेदपटलः

अथातो धर्मानुशासनम् ॥ १ ॥

ब्राह्मणक्षत्रिवैश्यशूद्राश्चत्वरो वर्णा इत्याचार्याः ॥ २ ॥

जन्मायत्तं वर्णत्वमित्येके ॥ ३ ॥

नेति वासिष्ठः ॥ ४ ॥

बहूनां राज्ञां ब्राह्मणीभावेन ब्राह्मणगोत्रकृत्त्वात् ॥ ५ ॥

व्रात्यादीनां च्युतेः ॥ ६ ॥

सर्वेषां च तुल्यं मानवत्वात् ॥ ७ ॥

ब्राह्मणोऽस्येति मन्त्रलिङ्गात्पारमेश्वरत्वमिति चेत्तदप्यसाधकं भेदस्य ॥ ८ ॥

जनकाङ्गभेदाद्भेदेति चेत् ॥ ९ ॥

विराडुपासनार्थं ब्राह्मणादिमुखाद्योरभेदस्यैव तत्र प्रतिपादनादलिङ्गम् एव तत् ॥ १० ॥

प्रश्नानुसारिणैव ह्युत्तरेण भवितव्यम् ॥ ११ ॥

पद्भ्यामिति तादर्थ्ये चतुर्थी नापादाने च पञ्चमी ॥ १२ ॥

तथाहि पूर्ववाक्यत्रयार्थानुसारी स्यादुत्तरो वाक्यार्थः ॥ १३ ॥

अर्थवादादिति चेन्न स भूतार्थवादः केवलं गुणपरत्वात् ॥ १४ ॥

स्मृतेरिति चेदन्यथाप्यस्ति स्मृतिः ॥ १५ ॥

उत्तरा भाक्तेति चेत्पूर्वैवास्तु विनिगमकविरहात् ॥ १६ ॥

हेतुदर्शनाच्च ॥ १७ ॥

अध्यापनविधिवाक्यस्थानुवादश्चेत् ॥ १८ ॥

स भाक्त एकजन्मनो द्विजत्वासिद्धेः ॥ १९ ॥

त्रैवर्णिकत्वद्विजत्वयोरितरेतराश्रयत्वापत्तेश्च ॥ २० ॥

जात्यनुगुणसंस्कारायत्तं वर्णत्वमिति चेदतिप्रसङ्गो दर्शितः ॥ २१ ॥

अव्याप्तिः संस्कारहीने शूद्रे ॥ २२ ॥

वृत्त्यायत्तं वर्णत्वमित्यपरे ॥ २३॥

नेति वासिष्ठः ॥ २४॥

वृत्तिवर्णयोरितरेतराश्रयत्वात् ॥ २५॥

नास्ति वृत्तिनियम इति चेदेकस्य कालभेदेन वृत्तिभेदाद्बहुवर्णत्वापत्तिः ॥ २६॥

उत्कर्ष एवेष्टापत्तिर्वक्तुं शक्त्या नापकर्षे ॥ २७॥

ब्राह्मणत्वस्यैव गन्तव्यत्वादितरेषां च सोपानतुल्यत्वात् ॥ २८॥

वृत्तिमात्रं वर्णत्वं न धर्मानुबन्धि तस्मान्न ब्राह्मणत्वस्य गन्तव्यम् इति चेत् ॥ २९॥

वर्णत्वं व्यवहारमात्रार्थं स्यात् ॥ ३०॥

असमन्वयश्च धर्मशास्त्राणाम् ॥ ३१॥

व्यवहाराय च पुरोहितादिप्रसिद्धपदसद्भावे ब्राह्मणादिपारिभाषिकपदकल्पनं निरर्थम् ॥ ३२॥

गुणायत्तं वर्णत्वमित्यन्ये ॥ ३३॥

नेति वासिष्ठः ॥ ३४॥

सद्गुणानां सर्ववर्णसाधारणधर्मत्वात् ॥ ३५॥

स्मृतेरस्ति स्वाभाविको गुणभेद इति चेदव्याप्त्यतिव्याप्तिभ्यां स प्रायो वादः ॥ ३६॥

कर्मायत्तं वर्णत्वमितीतरे ॥ ३७॥

नेति वासिष्ठः ॥ ३८॥

कर्मवर्णयोरितरेतराश्रयत्वात् ॥ ३९॥

नास्ति कर्मनियम इति चेदेकस्य कालभेदेन कर्मभेदाद्बहुवर्णत्वापत्तिः ॥ ४०॥

उत्कर्ष एवेष्टापत्तिर्वक्तुं शक्त्या नापकर्षे ॥ ४१॥

ब्राह्मणत्वस्यैव गन्तव्यत्वादितरेषां च सोपानतुल्यत्वात् ॥ ४२॥

आत्मनि समष्टिज्ञानशक्तेः समुल्लासे ब्राह्मणः ॥ ४३॥

समष्टिक्रियाशक्तेः क्षत्रियः ॥ ४४॥

अन्यतरां प्राप्तुं तपः प्रविष्टो विट् ॥ ४५॥

शोकाकुलस्तरणोपायं ज्ञातुं गुरुसमीपं यो द्रवति स शूद्रः ॥ ४६॥

संसारमेव परं मन्यमानस्तत्रैव यो निषीदति स निषादः ॥ ४७॥

# देवतामीमांसा (१)

## प्रथमोध्यायः

अथातो देवतामीमांसा ॥ १ ॥

विश्वं परमण्डलं चेत्यखिलो देशो द्वेधा विभक्तव्यः ॥ २ ॥

पूर्वमविकृतमिश्रं विकृतम् ॥ ३ ॥

उत्तरं साकल्येनाविकृतम् ॥ ४ ॥

पूर्वमिमं लोकमाहुः ॥ ५ ॥

उत्तरममुं लोकम् ॥ ६ ॥

सूर्यादिष्वदो लोकव्यवहारो भाक्तः ॥ ७ ॥

उभयं मिलित्वैकं सदुच्यते तत्त्वज्ञैः ॥ ८ ॥

तस्य पादः किल विश्वं त्रिपात्किल परमण्डलम् ॥ ९ ॥

पादोऽस्य विश्वा भूतानि त्रिपादस्यामृतं दिवीति निगमोऽत्र भवति ॥ १० ॥

त्रिपादुक्तिः परमण्डलमहिमप्रदर्शनार्थैव नेयत्तार्था ॥ ११ ॥

त्रिपादमृतं दिवोऽतिरिक्तं चेत्सतोऽन्याद्यौर्वक्तव्या ॥ १२ ॥

अनतिरिक्तं चेत्सप्तमी नोपपद्यते ॥ १३ ॥

बुद्ध्यपेक्ष एकस्यैवाधारात्वेनाधेयत्वेन च निर्देश इत्यविरोधः ॥ १४ ॥

परमण्डलं चिद्रूपं स्वप्रकाशम् ॥ १५ ॥

विश्वस्यापि सर्वथा चिद्रूपत्वे विभागानुपपत्तिः प्रत्यक्षविरोधश्च ॥ १६ ॥

अंशतो जडत्वे तस्यांशस्य जडत्वमूर्तत्वादि वैलक्षण्याद्वस्त्वन्तरत्वम् ॥ १७ ॥

मूर्तांशोऽपि चिन्मय एव भवति ॥ १८ ॥

अविकृतं ज्ञानं साक्षाच्चिद्विकृतं ज्ञानं चिन्मयमिति विशेषः ॥ १९ ॥

मृद्घटयोरिव तयोरैकात्म्यम् ॥ २० ॥

मिश्रत्वामिश्रत्वाभ्यां विभागोपपत्तिः ॥ २१ ॥

कथं मूर्तांशोऽपि चिन्मय इति चेत् ॥ २२ ॥

अनुभूतिविशेष एव हि मूर्तांशः ॥ २३ ॥

अनुभूतिश्च चितो नातिरिच्यते ॥ २४॥

ज्ञानमेव दृश्याकारं परिणमतीत्युक्तं भवति ॥ २५॥

सान्निध्याद्विषयो ज्ञाने प्रतिबिम्बितः स्यान्न ज्ञानं विषयाकारतया परिणमतीति चेत् ॥ २६॥

असान्निध्ये विषयस्मरणानुपपत्तिः ॥ २७॥

स्वप्नमाययोरितोऽपि स्पष्टोऽयमर्थः ॥ २८॥

एवं चेत्पुरस्तादेकोऽस्त्युनुभूयते तत्तुल्योऽन्य इति द्वौ विषयौ वक्तव्यौ ॥ २९॥

यद्विषयकं ज्ञानं तदाकारमेव हि परिणमति ॥ ३०॥

वस्तुतस्तदभावे तद्विषयकत्वं कथं स्यात् ॥ ३१॥

तयोरस्तु परश्चिन्मयः पूर्वस्य जडत्वं को वारयेदिति चेत् ॥ ३२॥

पूर्वः समष्टिविज्ञानांश इति तस्यापि चिन्मयत्वम् ॥ ३३॥

मायी विचित्रपदार्थानिव परदेवता विश्वं सृजति न कुलालो घटानिवेत्युक्तं भवति ॥ ३४॥

तस्माच्चिदेका समष्टिदेवता ॥ ३५॥

सा परा ॥ ३६॥

तस्या एवान्ये सर्वे देवाः सर्वे जनाः सर्वं जगच्च विभूतयः ॥ ३७॥

तामदितिमाहुरखण्डत्वात् ॥ ३८॥

अदितिर्द्यौरदितिरन्तरिक्षमदितिर्माता स पिता सपुत्रः विश्वेदेवा अदितिः पञ्चजना अदितिर्जातमदितिर्जनित्वमिति निगमोऽत्र भवति ॥ ३९॥

अदितिर्द्यौरिति स्वरूपोपदेशः ॥ ४०॥

शेषेण विभूतिवर्णनम् ॥ ४१॥

द्यौ दिवौ समष्टिचित्तेजसः पर्यायौ ज्ञातव्यौ ॥ ४२॥

तामेतां समष्टिदेवतां त्रिभिरपि लिङ्गैर्निर्दिशन्ति ॥ ४३॥

अदितिर्द्यौरित्यादौ स्त्रीलिङ्गेन ॥ ४४॥

पादोऽस्येत्यादौ पुंलिङ्गेन ॥ ४५॥

सदेव सोम्येदमग्र आसीदित्यादौ नपुंसकलिङ्गेन ॥ ४६॥

शक्त्यात्मवस्तुदृष्ट्या निर्देशा एते ॥ ४७॥

शक्तिरेवात्मा चेद्वेत्तृवित्तिविभागानुपपत्तिः ॥ ४८॥

शक्तिमानात्मा चेच्चितोऽन्यश्चिद्वान् वक्तव्यः ॥४९॥

तेजःप्रभाया सूर्ये च तुल्यं वस्तुतत्त्वं तथा चिदात्मशक्तावात्मनि च तुल्यं वस्तुतत्त्वं तस्मादभेदः ॥५०॥

व्यापकं सर्वावगाहि ज्ञानं शक्तिः सा वित्तिः ॥५१॥

अन्तरभूतं ज्ञानमात्मा स वेत्ता ॥५२॥

तथापि कोऽपि भेद इति चेत्तादृश इष्टः ॥५३॥

अभेदो वस्तुतो भेदो विभागादित्युक्तं भवति ॥५४॥

विभागतो भेदाद्व्यवहारे भेदोऽर्घ्यपाद्यवत् ॥५५॥

विभक्तत्वेन ज्ञानस्याखण्डत्वानुपपत्तिरिति चेन्न विभागस्या-त्राच्छेदकत्वात् ॥५६॥

विभक्तत्वेऽप्यविभक्तत्वं जलाशयकुल्यावत् ॥५७॥

मूलभूतं ज्ञानमात्मा प्रवाहभूतं ज्ञानं शक्तिरित्युक्तं भवति ॥५८॥

ज्ञान इदं ममेति प्रत्ययः संसारिण एवात्मन आभिमानिकः ॥५९॥

इदमहमेवेति प्रत्ययो योगिनः सत्यः ॥६०॥

वेत्तृवित्तिविभागश्च विषयग्रहणेष्वेव दृश्यते न निष्ठायाम् ॥ ६१॥

अविभक्तचिद्रूपेणावस्थानमेव हि तदा ॥ ६२॥

विभाग आगन्तुकोऽविभक्तैव सहजेत्युक्तं भवति ॥ ६३॥

प्रज्ञानं ब्रह्मेतिमहावाक्यं चात्रोदाहर्तव्यम् ॥ ६४॥

अन्तरस्य धर्मित्वेन शक्तेर्धर्मत्वेन च व्यवहार आभिमानिको भाक्तः ॥ ६५॥

एतेन शक्तेर्गुणत्वेन व्यवहारो व्याख्यातः ॥ ६६॥

अविभक्तचिद्रूपस्य सद्ब्रह्मादि नपुंसकलिङ्गैः शास्त्रे निर्देशः ॥ ६७॥

अन्तरभूतस्यात्मपुरुषादि पुंलिङ्गैः ॥ ६८॥

शक्तिभूतस्यादितिपरदेवतादि स्त्रीलिङ्गैः ॥ ६९॥

अन्तरदृष्ट्या ब्रह्म जगतो निमित्तकारणम् ॥ ७०॥

अणोरणीयः ॥ ७१॥

शक्तिदृष्ट्योपादानम् ॥ ७२॥

महतो महीयः ॥ ७३॥

एवं सर्वासां देवतानां समष्टिर्देवता व्याख्याता ॥ ७४॥

एतामुद्दिश्यैवैकं सद्विप्रा बहुधा वदन्तीति निगमः ॥ ७५॥

यो देवानां नामधा एक एवेति च ॥ ७६॥

सुपर्णं विप्राः कवयो वचोभिरेकं सन्तं बहुधा कल्पयन्तीत्यपि ॥ ७७॥

सेयं देवता विश्वं व्याप्यास्ति विश्वस्मात्परतश्च ॥ ७८॥

## द्वितीयोऽध्यायः

अन्तरशक्तिदृश्यात्मना त्रिरूपं ज्ञानं सा समष्टिरिति सिद्धम् ॥ १॥

त्रिपाद्दिवोऽन्तरो विश्वान्तरो मण्डलान्तरः शारीरकश्चेत्यन्तरश्चतुर्धा ॥ २॥

परमात्मा विश्वात्मा लोकात्मा जीवात्मा चेति तस्य चतुर्विधस्य तत्त्वतो नामानि ॥ ३॥

अन्तरस्य चतुर्विधत्वेन शक्तेश्चतुर्विधत्वं व्याख्यातम् ॥ ४॥

अथ समष्टेर्व्यक्तित्वमीमांसा ॥ ५॥

अस्मदादि व्यष्टिवन्मननेच्छा दर्शनश्रवणादिमत्त्वं व्यक्तित्वं परिभाष्यते ॥ ६॥

परमात्मन्येव समष्टेर्व्यक्तित्वं चेद्विश्वात्मप्रभृतीनां तदन्यत्वाद् असमष्टित्वम् ॥ ७॥

चतुर्विधेपि चेद्बहुत्वापत्तिः ॥ ८॥

उपास्योपासकभावोच्छेदश्च ॥ ९॥

परमात्मन्येव भवति ॥ १०॥

विश्वात्मा तस्यास्मादृशां मनोमयवत् ॥ ११॥

एकस्यैव द्विविधं व्यक्तित्वमस्ति यथास्माकं विज्ञानमयमनोमय-रूपेणेत्युक्तं भवति ॥ १२॥

पूर्वं नित्यमखण्डात्मानन्दानुभवाय सतां कैवल्यानुग्रहाय च परन्तु जगत्कार्याय ॥ १३॥

व्यक्तित्वद्वैविध्येप्यभिमानैक्यान्न पार्थक्यम् ॥ १४॥

अस्मासु चैवं दृश्यते ॥ १५॥

तस्यैव लोकेषु शरीरेषु चानुप्रविष्टत्वादैक्यं तस्मान्न समष्टित्वहानिः ॥ १६॥

तेषां पृथगभिमन्तृत्वात्पार्थक्यं तस्मान्न तद्व्यक्तीनां समष्टित्वम् ॥ १७॥

नन्वनुप्रविष्टस्यैव पृथगभिमन्तृत्वं चेत्तस्याविद्याकल्पयितव्या ॥ १८॥
अन्यस्य चेद्भेदः ॥ १९॥

जात्यैक्यमिति चेन्न विशेषस्य समष्टित्वमिति चेत् ॥ २०॥

अनुप्रविष्टस्य विज्ञानमयस्य पृथगनभिमन्तृत्वेऽपि मनोमयाय पृथग् अभिमन्त्रे चिच्छक्तिप्रदत्वाद्भेदेऽप्यैक्यं नान्तर्यामिनश्चाविद्या ॥ २१॥

विज्ञानमयादन्य एवान्तर्यामीत्येके ॥ २२॥

दृष्टिभेदादेव विज्ञानमयानन्दमययोर्भेदो न स्वरूपतो नोपाधितो वा तस्मान्नान्य इति वासिष्ठः ॥ २३॥

प्रतीची दिव्या सर्वावगाहिनी दृष्टिर्विज्ञानमयस्य ॥ २४॥

अखण्डैकरसा विश्रान्तानन्दमयस्य ॥ २५॥

पुर्वत्रास्ति त्रिपुट्युत्तरत्र केवलं पूर्णं विज्ञानमित्युक्तं भवति ॥ २६॥

# देवतामीमांसा (२)

## प्रथमोऽध्यायः

**॥ शास्त्रारम्भः ॥**

अथातो देवतामीमांसा ॥ १॥

निगमप्रमाणान्यनुसृत्य ॥ २॥

**॥ प्रमाणचर्चारम्भः ॥**

अथ निगमप्रमाणचर्चा ॥ ३॥

**॥ नवीनमीमांसकमतम् ॥**

शब्दो नित्यस्तेषां नित्यानां शब्दानामर्थसम्बन्धश्च नित्यः ॥ ४॥

तस्माच्छब्दा अर्थबोधकाः ॥ ५॥

अत एव ज्ञातसम्बन्धस्य श्रोतुः किमपि ज्ञानमुत्पादयेयुः ॥ ६॥

तत्प्रमाणं ज्ञानस्य स्वतः प्रामाण्यात् ॥ ७॥

नैवं सर्ववाक्यानां प्रामाण्यापत्तिः कारणदोषावधारणस्य तदपवादत्वात् ॥८॥

वेदास्तु प्रमाणमपौरुषेयत्वात्कारणस्यैवाभवेन तद्दोषशङ्कानवकाशात् ॥९॥

अपौरुषेयत्वं च वेदानां कर्त्रनुपलब्धेः ॥१०॥

॥ तस्य खण्डनम् ॥

विप्रतिषिद्धमिदं यदकृतकाः पदसङ्घाताः ॥११॥

पदसङ्घातस्य नित्यं कर्तृसापेक्षत्वात् ॥१२॥

शब्दनित्यत्वमन्यच्छब्दसङ्घातनित्यत्वमन्यत् ॥१३॥

पदार्था एव वाक्यार्थस्तस्मान्न सङ्घातापेक्षेति चेत् ॥१४॥

अस्तु पदार्था एव वाक्यार्थस्तथापि संहता एवेति वक्तव्यम् ॥१५॥

पदार्थानां सङ्घातश्चाकाङ्क्षादिबलाद्योगः ॥१६॥

पदार्थसङ्घातस्य च पदसङ्घातो हेतुर्वक्तव्यः ॥१७॥

पदसङ्घाताभावेपि पृथक् पृथग्वर्तिभ्य एव पदेभ्यः पदार्थाः स एव वाक्यार्थ इति चेत् ॥१८॥

वेदे यत्र क्वचिद्विद्यमानानामपि पदानामर्थाः प्रकरणाद्यनपेक्षाः कुतो वाक्यार्थो न स्यात् ॥१९॥

अग्निहोत्रं जुहुयात्स्वर्गकाम इति त्रीणि पदानि ॥ २०॥

योऽग्निमुद्वासयेदिति त्रीणि ॥ २१॥

तेषु चाग्निहोत्रमुद्वासयेत्स्वर्गकाम इति यदि कश्चिद्वदेत्स कथं प्रत्याख्यातव्यः ॥ २२॥

तस्यापि वैदिकपदार्था एव वाक्यार्थः ॥ २३॥

तस्यापि वाक्यार्थोऽस्त्याकाङ्क्षोपशमः ॥ २४॥

पाठक्रमभङ्ग इति चेत् ॥ २५॥

केनायं नित्यानां पदानां क्रमो निबद्धः ॥ २६॥

त्वन्मते कर्तुरभावात्पाठकानामुपरि स भारो निक्षेप्यः ॥ २७॥

तत्र कस्यचित्कश्चित्क्रमश्चेदपरस्यापरः कुतो न स्यात् ॥ २८॥

आद्यपाठकस्य क्रमोऽनुसर्तव्य इति चेत् ॥ २९॥

स स्वेच्छया नित्यानां पदानां कमपि क्रमं निबबन्धेति पौरुषेयत्वं पुनरायातम् ॥ ३०॥

कवयश्च लोके नित्यानामेव पदानां निबन्धन्ति कमपि क्रमम् ॥ ३१॥

एकस्य पदस्य बहुषु स्थलेषु वेदे दर्शनं च पदसङ्घातवादानुकूलम् ॥ ३२॥

जैमिनिश्च शब्दनित्यत्वमेव साधयति न वाक्यबन्धनित्यत्वम् ॥ ३३ ॥

कर्त्रनुपलब्धेरिति हेतुश्च न प्रतितिष्ठेन्मधुच्छन्दःप्रभृतीनामुपलब्धेः ॥ ३४ ॥

अग्निमीळे पुरोहितमित्यादीनि तेषां हि वाक्यानि ॥ ३५ ॥

यस्य वाक्यं स ऋषिरिति कात्यायनः ॥ ३६ ॥

न विशिष्टादध्यापनादनन्यसाधारणादध्ययनाद्वा तेषामृषित्वम् ॥ ३७ ॥

यस्य यद्वाक्यं स तस्य कर्तोच्यते ॥ ३८ ॥

वाक्यकृत्त्वं च पदसंयोजनमात्रं न पदोत्पादनम् ॥ ३९ ॥

अस्ति चर्षीणां मन्त्रकृत्त्वे प्रसिद्धिः ॥ ४० ॥

नमो मन्त्रकृद्भ्य इति ब्राह्मणम् ॥ ४१ ॥

सुकर्मपापमन्त्रपुण्येषु कृञ इति मन्त्रकृत्पदव्युत्पादने पाणिनिः ॥ ४२ ॥

" अप्यग्रणीर्मन्त्रकृतामृषीणां कुशाग्रबुद्धे कुशली गुरुस्ते" इति महाकवेश्च प्रयोगः ॥ ४३ ॥

सर्वमेतद्भाक्तं वेदानां नित्यत्वादिति चेत् ॥ ४४ ॥

15 नित्यत्वाख्या गौणत्वकर्त्रनुपलब्धीनामितरेतराश्रयत्वभ्रमणाच्चक्रकम् ॥ ४५ ॥

ऋषयो मन्त्रद्रष्टार इति प्रसिद्धेराख्या गौणत्वमिति चेत् ॥ ४६॥

न दर्शनशब्दस्य विशिष्टमध्यापनमनन्यसाधारणमध्ययनं वाऽर्थः ॥ ४७॥

मन्त्रविषये प्रवचनवादं परित्यज्य दर्शनवादं स्वीकुर्म इति चेत् ॥ ४८॥

शब्दस्य चक्षुरिन्द्रियागोचरत्वात्तस्याप्यनवकाशः ॥ ४९॥

अन्तः पश्यन्ती वागवभासेत तदेव दर्शनमिति चेत् ॥ ५०॥

दृष्टमर्थं द्योतयन्ती द्रष्टुरतिसूक्ष्मा भाषैव सा ॥ ५१॥

सा च तत्कृतितो नातिरिच्यते ॥ ५२॥

मन्त्रद्रष्टार इत्यत्र दर्शनं लक्षणया श्रवणमिति चेत् ॥ ५३॥

मन्त्रश्रोतार इत्यपि प्रसिद्धमृषीणामभिधानं दृश्येत तच्च नास्ति ॥ ५४॥

अस्ति मन्त्रकृतो मन्त्रद्रष्टार इति द्विविधैव प्रसिद्धिः ॥ ५५॥

उभयोः सामरस्यमेव कर्तव्यं नोभयत्यागो नान्योऽर्थः ॥ ५६॥

वेदानां श्रुतय इत्यभिधानमस्तीति चेत् ॥ ५७॥

न तदभिधानं मन्त्राणाम् ॥ ५८॥

# वासिष्ठदर्शनम्

## प्रथमोऽध्यायः

### प्रमाणचर्चावतारणम्

सिद्धिरर्थस्य प्रमाणतः ॥ १॥

॥ प्रत्यक्षप्रमाणविचारः ॥

अक्षजं व्यष्टिज्ञानं प्रत्यक्षं तदेकं प्रमाणम् ॥ २॥

अत्र ज्ञाता साक्षी ॥ ३॥

तदक्षभेदात्पञ्चविधम् ॥ ४॥

स्पर्शरसगन्धानामनुभूतिकाल एव ज्ञानं तदात्मकम् ॥ ५॥

अनुवादे स्मरणे च व्यक्ताव्यक्तनादात्मकम् ॥ ६॥

रूपस्यानुभूतौ स्मरणे च तदात्मकम् ॥ ७॥

अनुवादे व्यक्तनादात्मकम् ॥ ८॥

त्रिष्वपि तदात्मकं नादस्य ॥ ९॥

बलवदुत्तरमन्यथा ज्ञानं पूर्वज्ञानप्रामाण्यस्यापवादः ॥ १०॥

अपोदितप्रामाण्यं ज्ञानं भ्रमः ॥ ११॥

संशयेन कस्यचित्प्रामाण्यमनिर्धारितत्वात् ॥ १२॥

पूर्वोत्तरयोस्तुल्यबलत्वे संशयवत् ॥ १३॥

विषयस्य सन्निकर्षविप्रकर्षवशादिन्द्रियस्य गुणदोषवशाच्च बलाबल-निर्णयः ॥ १४॥

ज्ञानस्य प्रामाण्यं नैसर्गिकमेव न कृत्रिमम् ॥ १५॥

॥ अनुमानप्रमाणविचारः ॥

प्रत्यक्षेण लिङ्गेनेतरस्य प्रत्ययोऽनुमानं तदन्यत्प्रमाणम् ॥ १६॥

नियमेन तदेकसहवासिद्रव्यं द्रव्यान्तरस्य लिङ्गम् ॥ १७॥

एवं गुणो गुणान्तरस्य ॥ १८॥

कर्मणश्च ॥ १९॥

कर्मगुणस्य ॥ २०॥

नियतकारणं कार्यं कारणस्य ॥ २१ ॥

नियतोत्तराऽवस्था पूर्वस्याः ॥ २२ ॥

नियतकार्यं कारणं कार्यस्य ॥ २३ ॥

पूर्वावस्था नियताया उत्तरस्याः ॥ २४ ॥

कस्यचिद्विप्रकर्षोऽन्यस्य नियमेन दूरीकर्तुः ॥ २५ ॥

विप्रकर्षश्च देशतः कालतो वा ॥ २६ ॥

अनुभूतस्य सन्निकर्ष इव व्यावृत्तस्य विप्रकर्षश्च प्रत्यक्षः ॥ २७ ॥

प्रमितेः प्रागभिलषितस्यैव व्यावृत्तिः ॥ २८ ॥

कस्यचित्सन्निकर्षोऽन्यस्य नियमेन बाध्यस्य भूतस्य ॥ २९ ॥

चेष्टा नियतनिमित्ता निमित्तस्य ॥ ३० ॥

सादृश्यं स्मृतोपमेयसदृशत्वेन प्रसिद्धस्य ॥ ३१ ॥

तदुपमानमन्यत्प्रमाणमेकेषाम् ॥ ३२ ॥

तत्रान्यसादृश्यं प्रत्यक्षं तन्नामानुमेयम् ॥ ३२ ॥

एवं लिङ्गान्तराण्यप्यूह्यानि ॥ ३४॥

स्मरणात्मकमेवानुमानिकं ज्ञानम् ॥ ३५॥

इन्द्रियाणां प्राधान्यं प्रत्यक्षे बुद्धेरनुमाने ॥ ३६॥

**॥ आप्तवाक्यप्रमाणविचारः ॥**

श्रद्धेयस्य साक्षिणोऽनुवादकं वाक्यमाप्तवाक्यम् ॥ ३७॥

तदन्यत्प्रमाणम् ॥ ३८॥

नित्यं प्रत्यक्षानुमानान्यतरोपजीव्यम् ॥ ३९॥

तदपवादोऽन्यथा साक्षात्प्रत्यक्षं लिङ्गं च ॥ ४०॥

यथोक्तसाक्षिविप्रतिषेधे संशयवत् ॥ ४१॥

ऐतिह्यमाप्तवाक्यान्नातिरिच्यते ॥ ४२॥

तथापि तत्राप्तस्याज्ञातत्वात्तदन्यत्प्रमाणमेकेषाम् ॥ ४३॥

यथा तात्पर्यं तस्य प्रामाण्यं न यथा श्रुतमिति वासिष्ठः ॥ ४४॥

स्वभावविरुद्धेष्वैतिह्येषु तात्पर्यानुधावनम् ॥ ४५॥




Ganapati Muni: A Pencil Sketch
by Madam Jane Adames

# सर्वार्थदर्शनम्

## प्रथमोऽध्यायः

### प्रथमः पादः

॥ १॥ अर्थसिद्ध्यधिकरणम् ॥

सिद्धिः सर्वस्यार्थस्य प्रमाणात् ॥ १॥

॥ २॥ प्रमाणसङ्ख्याधिकरणम् ॥

प्रत्यक्षानुमानशब्दास्त्रीणि प्रमाणानि ॥ २॥

॥ ३॥ प्रत्यक्षाधिकरणम् ॥

इन्द्रियार्थसन्निकर्षोत्पन्नं ज्ञानमव्यपदेश्यमव्यभिचारि- व्यवसायात्मकं प्रत्यक्षमिति गौतमः ॥ ३॥

ज्ञानमिह भावार्थकल्युडन्तम् ॥ ४॥

विश्वस्य मूलं विभुज्ञानमितोऽन्यत् ॥ ५॥

विज्ञानाख्यं चान्तःकरणम् ॥ ६ ॥

इदमिदं नामेति प्रत्ययो व्यपदेश्यं सोऽन्यः प्रत्यक्षानुबन्धी ॥ ७ ॥

एतेन व्यपदेश्याः प्रत्यक्षानुबन्धिनोऽन्ये प्रत्ययाश्च व्याख्याताः ॥ ८ ॥

अर्थप्रकाशिकेन्द्रियवृत्तिः शब्दार्थसम्बन्धप्रकाशिका स्मृतिरिति प्रत्यक्षव्यपदेश्ययोः कारणभेदः ॥ ९ ॥

प्रागर्थानुभवस्ततः शब्दार्थसम्बन्धप्रत्यय इति कालभेदः ॥ १० ॥

शुद्धानुभवः पूर्वोऽन्तर्व्यवहार उत्तर इत्युक्तं भवति ॥ ११ ॥

प्रत्ययस्य व्यवहारत्वं च पश्यन्त्या वाचा संश्लिष्टत्वात् ॥ १२ ॥

न परैः सह बहिः केवलं वैखर्या व्यवहारः ॥ १३ ॥

आत्मन्यप्यन्तःपश्यन्त्या ॥ १४ ॥

अयमन्तर्व्यवहारः सम्प्रत्ययः शास्त्रेऽस्मिन्परिभाष्यते ॥ १५ ॥

व्यभिचारीप्रत्ययो भ्रमः सोऽन्यः प्रत्यक्षात् ॥ १६ ॥

कारणदौर्बल्यादस्फुटायां प्रतीतौ तामक्रमन्ती सादृश्यजन्येतर-स्मृतिर्भ्रमः ॥ १७ ॥

अनन्तरः सम्प्रत्ययस्तत्संवादी स्यात् ॥ १८ ॥

तदा भ्रान्तिरनुभूतिवद्भासेत ॥ १९ ॥

अव्यवसायः संशयः सोऽन्यः प्रत्यक्षात् ॥ २० ॥

उभयकोटिकः सम्प्रत्ययो हि संशयः ॥ २१ ॥

**॥ ४ ॥ प्रत्यक्षस्य सविकल्पत्वाधिकरणम् ॥**

अव्यपदेश्यं ज्ञानं निर्विकल्पत्वादप्रत्यक्षमित्येके ॥ २२ ॥

निर्विकल्पत्वं च निर्विशेषत्वम् ॥ २३ ॥

विशेषप्रतीतिं विना हि न विशिष्टप्रतीतिः ॥ २४ ॥

घटत्वप्रतीतिं विना न घटप्रतीतिरिति निदर्शनम् ॥ २५ ॥

प्रायः पदार्थज्ञानस्य किञ्चिद्धर्मप्रकारकत्वनियमः ॥ २६ ॥

घटत्वप्रकारके ज्ञाने घटो भासत इति निदर्शनम् ॥ २७ ॥

अथ किं प्रत्यक्षमिति चेत् ॥ २८ ॥

घट घटत्वादि वैशिष्ट्यावगाहि व्यपदेश्यं सविकल्पमेव ज्ञानं प्रत्यक्षम् ॥ २९ ॥

अस्मिन्नेव नैयायिकमते स्पष्टः स्वाचार्यविरोधः स यदव्यपदेश्यमेव ज्ञानं प्रत्यक्षं वदति ॥ ३०॥

युक्तिविरोधश्च भवति ॥ ३१॥

घटाकृतिरेव घटत्वं चेत्तस्य भासोऽस्त्येव प्रथमे ज्ञाने ॥ ३२॥

तद्भिन्नं पञ्चेन्द्रियग्राह्यं किमपि जातिपदवाच्यमिति चेत्तस्य कदाचिदपि न प्रत्यक्षत्वमनैन्द्रियकत्वात् ॥ ३३॥

अस्ति मनोग्राह्यत्वादैन्द्रियकत्वमिति चेत् ॥ ३४॥

किमर्थे सदेव गृह्यते कल्प्य उताहो ॥ ३५॥

नाद्यो द्रव्यगुणकर्मणामेव वः सत्त्वात् ॥ ३६॥

द्वितीये कल्पितप्रत्यक्षं न बहिरर्थस्य साधकं स्यात् ॥ ३७॥

स्वसिद्धान्तविरोधश्चोभयत्र ॥ ३८॥

तद्गतजातिस्तद्ग्राहिणेन्द्रियेणैव गृह्यत इति हि स्वसिद्धान्तः ॥ ३९॥

आकृतिलिङ्गाज्जातिग्रहणमिति चेदानुमानिकत्वप्रसङ्गः ॥ ४०॥

वस्तुत आकृतिरेव सामान्यं विशेषश्च यथोत्तरत्र व्याख्यास्यामः ॥ ४१॥

तस्मात्प्रथमं च ज्ञानं सविकल्पं घटाद्याकृतिप्रकारकत्वात् ॥ ४२॥

तदेवप्रत्यक्षमक्षं प्रतिगतत्वात् ॥ ४३॥

अनन्तरं स्मृत्या घटादिनामप्रतीतिः ॥ ४४॥

अव्यपदेश्यत्वमन्यन्निर्विकल्पत्वमन्यत् ॥ ४५॥

अशाब्दत्वं पूर्वं निर्विषयत्वं परम् ॥ ४६॥

अतीन्द्रियत्वापत्तिश्च प्रथमप्रत्ययस्याप्रत्यक्षत्वे ॥ ४७॥

तदिष्टमिति चेत् ॥ ४८॥

अनुभवापलापः ॥ ४९॥

**॥ ५॥ व्यवसायाधिकरणम् ॥**

अयं घट इति निर्धारितं ज्ञानं व्यवसायात्मकं तच्च व्यपदेश्यम् ॥ ५०॥

तस्मादव्यपदेश्यं व्यपदेश्यं चेति द्वेधा गौतमस्य प्रत्यक्षमित्यपरे ॥ ५१॥

स्पष्टत्वानुभूतिर्व्यवसायः ॥ ५२॥

तस्मान्न विसंष्ठुलया रीत्या सूत्रव्याख्यानावसरः ॥ ५३॥

॥ ६ ॥ व्यपदेशाधिकरणम् ॥

अयं घट इति व्यपदेशोऽन्तर्बहिर्वाऽभिधेयदृष्ट्या प्रत्यक्षप्रमाणकः ॥ ५४ ॥

अभिधानदृष्ट्या सङ्केतप्रमाणकः ॥ ५५ ॥

एतेनाहं घटं पश्यामीत्यादयो व्यपदेशाश्च व्याख्याताः ॥ ५६ ॥

॥ ७ ॥ इन्द्रियाधिकरणम् ॥

ज्ञानकरणानीन्द्रियाणि सप्तग्राह्याणीति वासिष्ठः ॥ ५७ ॥

घ्राणादीनि पञ्च मनो विज्ञानं चेति ॥ ५८ ॥

इन्द्रस्यात्मन इमानीति व्युत्पत्तिः ॥ ५९ ॥

पञ्च षड् वा गौतमस्य मतेनेति चेत् ॥ ६० ॥

यावद्युक्तमङ्गीकर्तुं तत्सूत्रोदाहरणं न सर्वथा तदनुसरणाय ॥ ६१ ॥

षट् पूर्वाणि सर्वसाधारणानि ॥ ६२ ॥

उत्तरं सिद्धानामेव विकसेत् ॥ ६३ ॥

तद्दिव्यं चक्षुराहुः केचित् ॥ ६४ ॥

चतुर्थं कोशं वेदान्तिनः ॥ ६५॥

हृदयं हृद्वैतत्प्राचां भाषायाम् ॥ ६६॥

तन्मनस एवाभिधानद्वयमिति चेत् ॥ ६७॥

न "जुष्टानि सन्तु मनसे हृदे चे" त्यादौ वेदे भेदेन निर्देशात् ॥ ६८॥

अभ्यासनिगृहीतेन मनसा हृदयाश्रयमिति भेदेन महाकवेः प्रयोगः ॥ ६९॥

हृदि विश मनसा स्वं चिन्वता मज्जतावेति महर्षेः ॥ ७०॥

विज्ञानं महदन्तःकरणं नव्यानां भाषायाम् ॥ ७१॥

मनोऽल्पम् ॥ ७२॥

न केवलं करणमुपाधिश्च विज्ञानमात्मनः ॥ ७३॥

विकसद्दिव्यचक्षुषः सिद्धानेवातीन्द्रियद्रष्टृनृषीनाहुः ॥ ७४॥

लोकसाधारणेन्द्रियदृष्ट्याऽतीन्द्रियत्वमलौकिकार्थस्य ॥ ७५॥

इन्द्रियेषु विज्ञानस्य सङ्ग्रहात्प्रत्यक्षेष्वार्षप्रत्यक्षस्य सङ्ग्रहो भवति ॥ ७६॥

यद्योगिप्रत्यक्षं नव्याः प्राहुः ॥ ७७॥

# आदिशास्त्रार्थसूत्रम्

## प्रथमोऽध्यायः

### प्रथमः पादः

अथात आदिशास्त्रार्थविचारः ॥ १॥

वैश्वामित्रस्य मधुच्छन्दसो दर्शनं व्याख्यास्यामः ॥ २॥

ईळतेः कर्ता होता मन्त्रस्य प्रयोक्तृत्वादित्येके ॥ ३॥

ऋषिस्तु तद्वाक्यत्वात् ॥ ४॥

होतुरध्येतुश्च न विशेषः ॥ ५॥

ईश्वरस्य वाग्वेदः प्रत्यक्षानुमानाभ्यामिति चेत्सा न वैखरी ॥ ६॥

कर्मभूतं चेदचेतनत्वादानर्थक्यं स्तुतेः ॥ ७॥

अत एव नेन्द्रियम् ॥ ८॥

देवतात्मा चेदल्पो महिमा ॥ ९॥

ईश्वरश्चेद्योगेनार्थगुणसङ्कोचासङ्गतिः ॥१०॥

ईश्वर एव तु विभूतिमुखेन तदेकपरत्वाच्छास्त्रस्य ॥११॥

भूतमीश्वरस्य चिन्मयी विभूतिस्तच्छक्तिपरिणामत्वात् ॥१२॥

देवतात्मा चिन्मयी तस्य ह्येष मायया गृहीतमाधिकारिकं रूपम् ॥१३॥

इन्द्रियमुभयात्मिका भूतसारत्वात्तच्छक्तिलेशाधिष्ठितत्वाच्च ॥१४॥

होतृत्वमिन्द्रियस्य गुणो वाचा हि शंसन्ति ॥१५॥

दूतत्वं च ॥१६॥

ज्ञापयति काले कृतिनविज्ञानानि क्षीयन्त इति यदीड्यो नूतनैरुतेत्याह ॥१७॥

# वासिष्ठकामसूत्रम्

## प्रथमोऽध्यायः

अथातः कामतन्त्रं व्याख्यास्यामः ॥ १ ॥

अनन्यपूर्वा पत्नी पूनर्भूर्वेश्या परकीया चेति चतस्रो नायिका इत्याचार्याः ॥ २ ॥

पूर्वाधर्म्या द्वितीया तृतीया च न धर्म्येनापि निषिद्धे चतुर्थी निषिद्धेति चाहुः ॥ ३ ॥

तृतीया च निषिद्धा बह्वनर्थमूलत्वादिति वासिष्ठः ॥ ४ ॥

निषिद्धयोर्नायिकाभासत्वाद्द्वे एव नायिके वासिष्ठस्य मतेन ॥ ५ ॥

तयोश्च भेदो धर्मशास्त्रकृत एव न कामशास्त्रकृत इति पुत्रफलस्य पत्नीत्वस्य तुल्यत्वादविशेषाच्च भोगे ॥ ६ ॥

पुंसश्च द्वितीयो विवाहो न धर्म्यो नापि निषिद्धः ॥ ७ ॥

अग्निहोत्रादिप्रयोजनत्वाद्धर्म्य एवेति चेत्तत्तुल्यं पुनर्भ्वा ॥ ८ ॥

धर्म्यत्वं चोभयोः पुर्वविवाहस्यावश्यकर्तव्यं नादृष्टजनकत्वम् ॥ ९ ॥

तस्यापि नियममात्रत्वादपापत्वमेव हि न पुण्यविशेषत्वम् ॥१०॥

एवमपि तस्यावश्यकर्तव्यत्वं सङ्घव्यवस्थार्थत्वात् ॥११॥

अत्यन्तविरक्तयोर्नैषोऽपि सर्वव्यवस्थानां प्रबलवैराग्यावधिकत्वात् ॥१२॥

एकैस्यैकैव नायिका शस्यते ॥१३॥

तथैक एवैकस्याः ॥१४॥

पुंसो बहुपत्नीकत्वं धर्मशास्त्रानिषिद्धमपि न कस्याश्चिदपि सुखायेति कामागमासम्मतम् ॥१५॥

स्त्री पुंसयोरुभयोश्च सुखाय कामशास्त्रं प्रवर्तत इत्याचार्याः ॥१६॥

वस्तुतो नारीणां सुखोत्पादनायेति वासिष्ठः ॥१७॥

पुंसां प्रतारणाय रागशून्याभिरपि गणिकाभिर्यदिदमुपयुज्यते तदन्यत् ॥१८॥

अधीतकामागमः पुरुषः शास्त्रीयैर्विधिभिर्नारीं रञ्जयेत् ॥१९॥

अशास्त्रीयेणापि रतेन पुरुषस्तृप्तिं यायान्न तथा नारीं ॥२०॥

ममेयं तर्पितेति तृप्तिः पुरुषस्याधिका शास्त्रीये ॥२१॥

16 सा त्वन्या कामसुखात् ॥२२॥

रतनार्यास्तर्पणं पुंसो धर्मं मन्यते वासिष्ठः ॥ २३॥

न केवलं सन्तोषकृदपि तु प्रेमवर्धकं शीलस्थापकं श्रेष्ठापत्यप्रदं च तन्नारीणाम् ॥ २४॥

तत्र पुमानपि भागस्वामी स्यात् ॥ २५॥

## द्वितीयोऽध्यायः

स्त्रियापि कामशास्त्रमध्येतव्यं दम्पतिलीलानां क्रीडासधर्मत्वाद् उभयोश्च हि तद्विज्ञानमावश्यकम् ॥ १॥

प्रयोक्ता प्रायः पुमान् ॥ २॥

केषुचित्प्रयोगेषु प्रतिग्रहणमात्रं नार्याः ॥ ३॥

केषुचित्प्रतिप्रयोगाः ॥ ४॥

केचिदेव नारीप्रयोगः ॥ ५॥

सम्बाधः साधनं चेति स्त्रीपुंसयोः प्रजनननामनी ॥ ६॥

उभयोश्च विसृष्टिसुखं भाव उच्यते ॥ ७॥

पुरुषस्येव स्याद्भावो न स्त्रीणामिति श्वेतकेतुः ॥ ८॥

भावं विनापि तासां सुखं कण्डूत्यपनोदनजन्यम् ॥ ९॥

उपद्रव्यैरपि तस्य साध्यत्वान्नैव स्त्रीणां पुरुषापेक्षेति चेत्तत्राभिमानिकस्तु स्वस्या भाव इति तासां पुरुषापेक्षा ॥ १०॥

आलिङ्गनचुम्बनोपसृप्तादिजं स्पर्शसुखमाभिमानिकम् ॥ ११॥

नारी च भावमधिगच्छेदिति बाभ्रव्यः ॥ १२॥

रतान्ते पुरुषस्य भावो रतारम्भात्प्रभृति यावद्रससमाप्ति नार्याः ॥ १३॥

सकृदेव क्षरेत्पुरुषस्य वीर्यं नार्यास्तु सन्तत सकाल इति विशेषः ॥ १४॥

पुरुषस्येव नार्या अपि सम्पूर्णा धातुक्षरणाद्विरामाभीप्सा ॥ १५॥

प्रायो नार्याः सम्पूर्णधातुक्षरणात्प्रागेव पुरुषस्य क्षरेद्धातुः ॥ १६॥

नार्यास्तु श्रमादेव विरामाभीप्सा श्वेतकेतोर्मतेन ॥ १७॥

भावप्राप्तिश्चास्ति कण्डूतश्चापनुद्यत इति नार्या उभयथाप्यस्ति सुखमिति वासिष्ठः ॥ १८॥

धातुक्षयादेव पूर्णा विरामाभीप्सा नार्याः ॥ १९॥

श्रमात्तु कतिपयक्षणविश्रान्त्यपेक्षैव न विरामाभीप्सा ॥ २०॥

रतारम्भात्प्रभृति स्त्रीणां धातुक्षरणमिति न सार्वत्रिकम् ॥ २१॥

यथा विध्यालिङ्गनचुम्बनादिभिरुपचारैः सन्धुक्षितायां रागाविष्टायां सम्यगुपसृप्तायां सारम्भात्प्रभृति भावप्राप्तिर्न सर्वस्याम् ॥ २२॥

कामजलादन्य एव स्त्रीणां धातुः ॥ २३॥

समञ्जनः सारः ॥ २४॥

रागेण तस्मिन्नन्तर्मथ्यमाने यः शारीर ऊष्मा जायते ततो जातः सम्बाधस्यान्तर्विलक्षणः स्वेदः कामजलम् ॥ २५॥

तदुदय एव भावप्राप्तिश्चेन्नार्या इष्टपुरुषदर्शनेपि भावप्राप्तिप्रसङ्गः प्रेमोद्रेकमात्रेणापि तदुदयात् ॥ २६॥

इच्छाकारणमेव कामजलागमो न सुखविशेष इति निर्विवादो विषयः ॥ २७॥

आर्तवाच्यान्यः स धातुः ॥ २८॥

तद्युक्तमेवार्तवं पुरुषस्य वीर्यमाकृष्य गर्भधारणक्षमं स्यात् ॥ २९॥

कण्डूतिकारिणः सूक्ष्माः क्रिमयः कामजल एव न सर्वदा सम्बाधस्यान्तः ॥ ३०॥

अन्यथा नित्येच्छाप्रसङ्गः ॥ ३१॥

## तृतीयोऽध्यायः

आभिमानिकं सुखं स्त्रीपुंसयोस्तुल्यम् ॥ १॥

तदभियुज्यमाना नार्यभिगच्छेदभियुञ्जन्पुरुष इति प्रायो वादः ॥ २॥

आलिङ्गनादीनां प्रतिग्रहणमभियुज्यमानत्वम् ॥ ३॥

पयोकृत्वमभियोगः ॥ ४॥

विपर्ययेणाप्यभिमानिकसुखलाभो दृश्यते ॥ ५॥

आभिमानिकस्य सुखस्य तुल्यत्वेपि रते पुरुषान्नार्याः सुखविशिष्यते कण्डूत्यपमानोदनवशाद्भावस्य च सातत्यात् ॥ ६॥

स्त्रीपुंसयोर्भावस्य तुल्यत्वेपि सातत्यक्षणिकत्वाभ्यां विशेषः ॥ ७॥

पुमान् रते नारीभावायैव प्रयतेत नात्मनो भावाय ॥ ८॥

पूर्वस्य यत्नसाध्यत्वादुत्तरस्य सुलभसाध्यत्वात् ॥ ९॥

यत्रोभयोः पूर्णा तृप्तिस्तत्सुरतम् ॥ १०॥

यत्र पुरुषस्य पूर्णा तृप्तिर्नार्यास्तृप्तिर्मध्यमा तद्रतम् ॥ ११॥

अल्पा चेद्दूरतम् ॥ १२॥

यत्र नार्याः पूर्णा तृप्तिर्न पुरुषस्य न रतयोगः ॥ १३ ॥

प्रथमचरमावुत्तमौ ॥ १४ ॥

द्वितीयो मध्यमः ॥ १५ ॥

तृतीयोऽधमः ॥ १६ ॥

## चतुर्थोऽध्यायः

शशो वृषोऽश्व इत्युत्तरोत्तरोन्नतसाधनास्तिस्त्रः पुरुषजातयो मृगी बडबा हस्तिनीत्युत्तरोत्तरगभीरसम्बाधस्तिस्त्रो नारीजातय इति प्राञ्चः ॥ १ ॥

शशवृषभोर्मध्ये हरिणस्य मृगीबडबयोर्मध्ये धेनोश्च सत्त्वाश्चतस्त्रो जातय इति तु परे ॥ २ ॥

मृगीधेनुबडबाः पद्मिनीचित्रिणीशङ्खिन्यो नामान्तरेण ॥ ३ ॥

परिणाहश्चेदुत्तरोत्तराधिको जातीनाम् ॥ ४ ॥

गुणैर्जातयः पूर्वपूर्वं श्रेष्ठाः ॥ ५ ॥

उत्तरोत्तरं रते चण्डाः ॥ ६ ॥

प्रकृत्यातिर्यग्जन्तुष्ठायामे न स्त्रीजातेः पुञ्जातिरधिकेति मृगीशशयो-

र्धेनुहरिणयोर्बडबावृषयोर्हस्तिन्यश्वयोश्च तुल्यजातित्वकथनम् ॥ ७॥

स्त्रीपुंसयोस्तुल्यजातित्वे समं रतम् ॥ ८॥

तच्चतुर्धा तुल्यद्वन्द्वयोश्च तुष्टात् ॥ ९॥

एकावरा चेन्नारीजातिरुच्चं रतम् ॥ १०॥

तत्त्रेधा तादृशविषमद्वन्द्वयोस्त्रित्वात् ॥ ११॥

द्वयवराचेदुच्चतरम् ॥ १२॥

तद्द्वेधा तादृशविषमद्वन्द्वयोर्द्वित्वात् ॥ १३॥

त्र्यवराचेदुच्यताम् ॥ १४॥

तदेकं तादृशविषमद्वन्द्वस्यैकत्वात् ॥ १५॥

एकाधिका चेन्नारीजातिर्नीचं रतम् ॥ १६॥

द्वयधिका चेन्नीचतरम् ॥ १७॥

त्र्यधिका चेन्नीचतमम् ॥ १८॥

# महावार्तिकम्

## प्रथमः पटलः

### प्रथममधिकरणम्

अथातो तन्त्रार्थशक्तिविचारः ॥ १॥

आदिवेदसंहिताया येषामुपलब्धिः ॥ २॥

अनवगतार्थैरविदितशक्तिभिर्न यावत्प्रयोजनाधिगमः ॥ ३॥

शक्तिविचारोऽलं अनुष्ठानोपकारकत्वादिति चेत् फलविशेषेषु तस्य सापेक्षत्वम् ॥ ४॥

प्रत्यक्षश्रुतिभिर्विनियोगावगतिरिति चेत्सर्गेषु केन ॥ ५॥

अपवादोऽपि लिञ्ङ्गादेव विनियोगस्य ॥ ६॥

न लिङ्गादपि विनियोगस्य बहुधैकस्य दर्शनात् ॥ ७॥

अनपेक्षं च प्रयोजनायार्थज्ञानं विद्या हि ॥ ८॥

प्रमाणान्तरगोचरस्याधिगतिर्वैदिकविद्यया ॥ ९॥

धर्मश्च पृथक् फलामननात् ॥ १०॥

## द्वितीयमधिकरणम्

ऋचामनुष्ठानेषु विनियोगो जपपाठयजनानुवाकशंसनैः ॥ ११॥

स्वार्थे गतिरेव प्रामाण्योपपत्तेरेकेषाम् ॥ १२॥

उभयधातूपयोगः पावकत्वबोधकत्वयोरविरोधात् ॥ १३॥

## तृतीयमधिकरणम्

प्रामाण्यमाप्तवाक्यत्वादेके ॥ १४॥

ईश्वरवाक्यत्वादपरे ॥ १५॥

अकृतकत्वेन दोषाप्रतिष्ठानादितरे ॥ १६॥

सर्वस्य हि ज्ञानस्य स्वतः प्रामाण्यमेकेषाम् ॥ १७॥

कारणदोषावधारणं तदपवादः ॥ १८॥

अप्रामाण्यमेवाकृतकत्वे येषां ज्ञानं कारणगुणावधारणात् प्रमाणं न स्वतः ॥ १९॥

प्रथमपक्षाङ्गीकारेऽपि केषाञ्चिदकृतकत्वे विप्रतिपत्तिः ॥ २० ॥

विप्रतिषिद्धमिदं यदकृतको वाक्यबन्धश्चेति ॥ २१ ॥

कर्तुरनुपलब्धेरिति चेन्न मधुछन्दःप्रभृतीनामुपलब्धेः ॥ २२ ॥

प्रवचनादाख्येति चेन्नासिद्धत्वान्नित्यत्वस्य ॥ २३ ॥

वचनप्रामाण्यान्नित्यत्वमिति चेदनित्यत्वमपि ॥ २४ ॥

यज्ञाज्जज्ञिरे इति नारायणस्य दृष्टिः ॥ २५ ॥

काव्यानि वेधस इति पराशरस्य ॥ २६ ॥

हृदा त्वष्टा इत्यन्यत्र ॥ २७ ॥

शक्त्या विदावेति हिरण्यस्तूपस्य ॥ २८ ॥

नवत्वेन बहूनामात्मीयत्वेन च ॥ २९ ॥

ऋषिरवोचदुक्तं ऋषिणेत्यादीनि ब्राह्मणानि चात्र भवन्ति ॥ ३० ॥

ऋषीनुद्दिश्य प्रयोगा अभियुक्तानां मन्त्रकृत इति ॥ ३१ ॥

वचनप्रामाण्यं चासिद्धनित्यत्वसिद्धेः प्राग्वः ॥ ३२ ॥

अनित्यत्वसंयोगस्त्वकृतकत्वप्रतिकूलस्मृतिसामान्यमात्रमिति केवलः प्रौढिवादः ॥ ३३ ॥

दृष्टानि व्याख्यानानि वः प्रतिकूलानि ॥ ३४ ॥

परःसहस्राणि पदानि प्रसिद्धिव्यतिरेकेण प्रकरणाविरोधेन युष्माभिः व्याख्येयानि स्युः ॥ ३५ ॥

तावदेषा युक्तिः न शोभते यावदसम्पूर्णं वो व्याख्यानम् ॥ ३६ ॥

द्वित्रिपदव्याख्यानेन चरितार्थता न स्यात् ॥ ३७ ॥

नास्त्वन्वयतः कश्चित्साधको हेतुरकृतकत्वस्य ॥ ३८ ॥

न च व्यतिरेकतः कर्त्रनुपलब्धेः प्रतिविहितत्वात् ॥ ३९ ॥

विरुद्धं चास्ति लिङ्गम् ॥ ४० ॥

तस्माद्विरोधोऽयं यथावत्परिहृत्यापि न किञ्चित्करः स्यात् कृतकत्वाप्रतिद्वन्द्वित्वात् ॥ ४१ ॥

शब्दार्थसम्बन्धानां नित्यत्वपक्षेऽपि बन्धनित्यत्वं दुःसाध्यम् ॥ ४२ ॥

आपद्यते च लौकिकग्रन्थनित्यत्वं विशेषाभावात् ॥ ४३ ॥

ईश्वरवाक्यत्वार्थोऽपि न समञ्जसः प्रार्थनाभिशापावरस्तुतिभ्यः ॥ ४४ ॥

पदार्थमिति चेत्सामान्याभिप्रायत्वान्न व्यक्तिनिर्देशः कार्यः ॥ ४५॥

परिमितकालकथायोगाच्च ॥ ४६॥

ऋष्याख्यानुकूलत्वेन व्यवस्थिताभ्यां भाषागतिभेदसादृश्याभ्याम् ॥ ४७॥

वक्तृभेदपरिहार्येभ्यश्च पुनरुक्तिदोषेभ्यः ॥ ४८॥

अहमर्थान्वितयोरज्ञानसंशययोरपरार्थत्वादनुपपत्तेः ॥ ४९॥

एतज्जातीयमितरच्चास्त्युदाहार्यं बहु ॥ ५०॥

आप्तवाक्यत्वात्प्रामाण्यं गुणसापेक्षं दोषाभावसापेक्षं वा वक्तुः ॥ ५१॥

तन्निर्धारणाय कश्चित्साधारणो हेतुरपेक्षितः ॥ ५२॥

प्रमाणान्तरप्रमितानुवादकत्वमिति चेत्तदननुग्रहीतस्य वैदिकज्ञानस्य प्रामाण्यं शिथिलं स्यात् ॥ ५३॥

ईश्वरलब्धानुवादकत्वमिति चेत्कामक्रोधाद्यप्रसक्तिः ॥ ५४॥

तस्मान्नैते त्रयो हेतवः ॥ ५५॥

### चतुर्थमधिकरणम्

दर्शनत्वात्प्रामाण्यं गणपतेः ॥ ५६॥

दर्शनं यत्समष्टेः करणेन स्वकीयेनेव स्वहृदये परत्र वा गुप्तमर्थमृषिः पश्यति ॥ ५७ ॥

वाक्यात्मना तस्याभिव्यक्तिर्मन्त्रः ॥ ५८ ॥

ज्ञानस्य शब्दात्मना कथमभिव्यक्तिरिति चेदविशेषात् ॥ ५९ ॥

अव्यक्तं शब्दायत इत्येव यज्जानातीति ॥ ६० ॥

समष्टेः करणं व्यष्टेः स्वं स्यात्तपोबलाद्यथा परयत्नाद्योगनिद्रायाम् अधुना लोके ॥ ६१ ॥

प्रसिद्धिरत उपर्युत्तरम् ॥ ६२ ॥

प्रसिद्धिरिह परम्परागतादाप्तवाक्यान्नातिरिच्यते ॥ ६३ ॥

आप्तवाक्यं दर्शनं पृथगेव प्रमाणे गणपतेः ॥ ६४ ॥

प्रमाणान्तरप्रमितानुवादत्वात्प्रामाण्यं आप्तवाक्यस्य ॥ ६५ ॥

सिद्धस्य धनमिति चेन्न प्रमेयासन्निधौ तदुपयोगात् ॥ ६६ ॥

दर्शनस्य समष्टिकरणप्रत्यक्षत्वात् ॥ ६७ ॥

प्रत्यक्षेऽन्तर्भाव इति चेन्न कारणवैलक्षण्यात् ॥ ६८ ॥

आप्तवाक्यदर्शनवाक्ययोरनुवादत्वाभिव्यक्तित्वाभ्यां वैलक्षण्यम् ॥ ६९ ॥

काणादादिषु दर्शनव्यवहारो भाक्तः ॥ ७० ॥

काव्यानि वेधस उच्यन्ते दर्शनानि करणस्य तदीयत्वात् ॥ ७१ ॥

ऋषीणां तत्कर्तृकत्वात् ॥ ७२ ॥

**पञ्चममधिकरणम्**

ऋचः प्रणवेऽभिव्यक्तिलिङ्गाद्दृषिभ्यः प्रागपि ॥ ७३ ॥

तदेतत्पश्यन् दीर्घतमा ऋचो अक्षरे परमे व्योमन्नित्याह ॥ ७४ ॥

वाचा विरूपनित्ययेति विरूपस्य दर्शनं चैव समर्थितं स्यात् ॥ ७५ ॥

प्रणवोऽव्य क्तशब्दः सर्वव्यापी परशक्तेर्नातिरिच्यते ॥ ७६ ॥

परशक्तिसमष्टिकरणमित्यनर्थान्तरम् ॥ ७७ ॥

आपद्यते करणप्रमितयोरविशेष इति चेत्तदिष्टम् ॥ ७८ ॥

तेन तत्तरङ्गाणां दर्शनं मनसेव सङ्कल्पानाम् ॥ ७९ ॥

अविभक्ततया तादात्म्येन प्रणवे विभक्ततया दर्शनेषु ॥ ८० ॥

सर्वाणि ज्ञानान्येवमिति चेद्व्यष्टिकरणैर्व्यवधानम् ॥ ८१ ॥

अत एव लौकिकं ज्ञानं सत्यमसत्यं वा स्यात्कारणे गुणदोषयोरुभयोरपि सम्भवात् ॥८२॥

कामादिः समष्टावुपपन्नमिति चेत् व्यष्टेरेवायं गृह्यमाणः ॥८३॥

अज्ञत्वादिवचनं केवलमात्मश्लाघाविपर्ययः ॥८४॥

उत्तरत्र सर्वज्ञवदुक्तेः ॥८५॥

अहङ्कारस्यार्षत्वमुक्तम् ॥८६॥

अभिव्यक्तौ सन्निकृष्टशब्दोपाधिकत्वमिष्टं यथा स्मृत्यनुवादेषु लौकिकेषु ॥८७॥

अभिव्यक्तिविशेषाणां प्रणवानन्यत्वमुक्तम् ॥८८॥

उपाधिरत्राकृतिविशेषो मृद इव घटः ॥८९॥

अर्थाः सन्निकृष्टा विप्रकृष्टाश्च जिज्ञासानुसारात् ॥९०॥

एतेन तात्कालिककथायोगः प्रमाणान्तरागोचरार्थयोगश्च व्याख्यातौ ॥९१॥

कामादेः सन्निकृष्टेष्वन्तर्भावः ॥९२॥

उपायभूतमन्त्रदिदृक्षैव तत्र जिज्ञासा ॥९३॥

एवमृचां प्रणवात्मकत्वं वाक्यात्मकत्वं च व्याख्याते ॥९४॥

॥ वासिष्ठकाव्यकण्ठगणपतिमुनेः ग्रन्थमाला ॥

Vāsiṣṭhakāvyakaṇṭhagaṇapatimuneḥ Granthamālā

# Collected Works of Vasishtha Kavyakantha Ganapati Muni

## Contents of all Volumes

### VOLUME 1

1. स्तोत्रग्रन्थमाला *stotragranthamālā*
**The Book of Adoration (Part One)**

| | | |
|---|---|---|
| **1.1.** | श्रीगुरुस्तुतिः *śrīgurustutiḥ* | Verses in praise of the guru lineage (5 verses) |
| **1.2.** | हेरम्बोपस्थानम् *herambopasthānam* | Verses praising the glory of Ganesha (40 verses) |
| **1.3.** | उमात्रिशती *umātriśatī* | Three hundred names of Goddess Uma (38 verses) |
| **1.4.** | उमाशतकम् *umāśatakam* | Verses in praise of Goddess Uma (100 verses) |
| **1.5.** | उमाऽक्षरमाला *umā'kṣaramālā* | Verses extolling Goddess Uma in Sanskrit alphabetical order (50 verses) |
| **1.6.** | उमासहस्रम् *umāsahasram* | Adoration of the Divine Mother Uma (1000 verses) |

VOLUME 2

## 2. स्तोत्रग्रन्थमाला *stotragranthamālā*
## The Book of Adoration (Part Two)

| | | |
|---|---|---|
| **2.1.** | देवीस्तोत्रमञ्जरी<br>*devīstotramañjarī* | Verses in praise of Goddess Uma (118 verses) |
| **2.2.** | श्रीत्रिपुरसुन्दरीगीतम्<br>*śrītripurasunda-rīgītam* | Singing praise of Goddess Tripurasundari (18 verses) |
| **2.3.** | अमृताम्बापञ्चरत्नम्<br>*amṛtāmbā-pañcaratnam* | Verses in praise of Amritamba – the consort of Narasimha (5 verses) |
| **2.4.** | सौन्दर्याम्बानिर्वाण-षट्कम्<br>*soundaryāmbā-nirvāṇaṣaṭkam* | Verses on the liberation of Saunda-ryamba – the mother of Sri Ramana Maharshi (6 verses) |
| **2.5.** | रेणुकाषट्कम्<br>*reṇukāṣaṭkam* | Verses on Renuka – the mother of Parasurama (6 verses) |
| **2.6.** | रेणुकासप्तकम्<br>*reṇukāsaptakam* | Verses in praise of Goddess Renuka (7 verses) |
| **2.7.** | इन्द्राणीसप्तशती<br>*indrāṇīsaptaśatī* | Verses in praise of Goddess Indrani – the consort of the Vedic godhead Indra (700 verses) |

| | | |
|---|---|---|
| **2.8.** | प्रचण्डचण्डीत्रिशती *pracaṇḍacaṇḍī-triśatī* | Verses in praise of Chinnamasta – one of the ten cosmic powers of the Divine Mother (300 verses) |
| **2.9.** | मङ्गलगौरीस्तोत्रम् *maṅgalagaurī-stotram* | Benedictory verses in praise of Goddess Gauri (8 verses) |

## VOLUME 3

3. स्तोत्रग्रन्थमाला *stotragranthamālā*
**The Book of Adoration (Part Three)**

| | | |
|---|---|---|
| **3.1.** | श्रीरमणचत्वारिंशत् *śrīramaṇa-catvāriṁśat* | Verses in praise of Sri Ramana Maharshi (40 verses) |
| **3.2.** | शिवशतकम् *śivaśatakam* | Verses in praise of Shiva (100 verses) |
| **3.3.** | शिवस्तवराजः *śivastavarājaḥ* | Verses in praise of Shiva (72 verses) |
| **3.4.** | शिवसप्ततिनामस्तोत्रम् *śivasaptati-nāmastotram* | Seventy names of Shiva as mentioned in the Veda (8 verses) |
| **3.5.** | इन्द्रसहस्रनामस्तोत्रम् *indrasahasra-nāmastotram* | Verses having one thousand names of Indra as mentioned in the Rigveda (115 verses) |

| | | |
|---|---|---|
| **3.6.** | इन्द्रसहस्रे प्रथमं शतकम्<br>*indrasahasre pathamaṁ śatakam* | Verses in praise of Indra (100 verses) |
| **3.7.** | इन्द्रसहस्रे कटाक्ष-स्तबकः<br>*indrasahasre kaṭākṣastabakaḥ* | Verses extolling the graceful look of Indra (24 verses) |
| **3.8.** | इन्द्रविंशतिः<br>*indraviṁśatiḥ* | Verses in praise of Indra (20 verses) |
| **3.9.** | इन्द्रसप्तकम्<br>*indrasaptakam* | Verses in praise of Indra (7 verses) |
| **3.10.** | पवनाष्टकम्<br>*pavanāṣṭakam* | Verses in praise of Vayu (8 verses) |
| **3.11.** | श्रीनृसिंहपञ्चरत्नम्<br>*śrīnṛsiṁha pañcaratnam* | Verses in praise of Sri Narasimha (5 verses) |
| **3.12.** | श्रीयोगाञ्जनेयपञ्चरत्नम्<br>*śrīyogāñjaneya-pañcaratnam* | Verses in praise of Sri Yoganjaneya (5 verses) |
| **3.13.** | तारकरामनामस्तुतिः<br>*tārakarāma-nāmastutiḥ* | Verses singing the name of Sri Rama (16 verses) |

| | | |
|---|---|---|
| 3.14. | कृष्णाक्षरमाला<br>*kṛṣṇākṣaramālā* | Verses on Sri Krishna in Sanskrit alphabetical order (50 verses) |
| 3.15. | रामगीता<br>*rāmagītā* | Verses on Sri Rama (9 verses) |
| 3.16. | गीतमाला<br>*gītamālā* | Garland of ten songs praising different Vedic and other godheads (225 verses) |
| 3.17. | शिवगीतम्<br>*śivagītam* | Verses praising Lord Shiva (25 verses) |
| 3.18. | रमणगीतम्<br>*ramaṇagītam* | Verses praising Sri Ramana Maharshi (4 verses) |

## VOLUME 4

## 4. तत्त्वग्रन्थमाला *tattvagranthamālā*
## The Book on Principles of Existence

| | | |
|---|---|---|
| 4.1. | सदाचारबोधिनी<br>*sadācārabodhinī* | Code of conduct for human beings (81 verses) |
| 4.2. | तत्त्वघण्टाशतकम्<br>*tattvaghaṇṭā-śatakam* | Verses on the principles of existence composed extempore in one hour as a part of an ashtavadhanam (100 verses) |

| | | |
|---|---|---|
| 4.3. | *तन्त्रहृदयम्<br>*tantrahṛdayam* | A Tantra treatise on worshipping different aspects of the Divine Mother (192 verses) |
| 4.4. | अक्षरावलिः<br>*akṣarāvaliḥ* | Verses describing Sanskrit syllables (alphabet) and their corresponding deities (21 verses) |
| 4.5. | श्रीरमणगीता<br>*śrīramaṇagītā* | Teachings of Sri Ramana Maharshi (303 verses) |
| 4.6. | सद्दर्शनम्<br>*saddarśanam* | Sanskrit rendering of an original Tamil text "*ulladu narpadu*" of Sri Ramana Maharshi (44 verses) |
| 4.7-9. | *विश्वमीमांसा<br>*viśvamīmāṁsā* | These three (4.7-9) deal with several spiritual and metaphysical aspects of the principles of existence (679 verses) |
| 4.10. | *धर्मानुशासनम्<br>*dharmānu-śāsanam* | Verses dealing with the Hindu religious injunctions (39 verses) |

---

* Incomplete writings

VOLUME 5

## 5. सूत्रग्रन्थमाला *sūtragranthamālā*
## The Book of Aphorisms (Part One)

| | | |
|---|---|---|
| **5.1.** | महाविद्यासूत्रम् *mahāvidyāsūtram* | On the ten cosmic powers of the Divine Mother (705 aphorisms) |
| **5.2.** | राजयोगसारसूत्रम् *rājayogasārasūtram* | Essence of Rajayoga (103 aphorisms) |
| **5.3.** | इन्द्रेश्वराभेदसूत्रम् *indreśvarā bhedasūtram* | Proclamation of the non-difference between Indra and Ishwara (37 aphorisms) |
| **5.4.** | चतुर्व्यूहसूत्रम् *caturvyūhasūtram* | Four main aspects of the Indra of the Rigveda (162 aphorisms) |
| **5.5.** | रुद्रकुटुम्बसूत्रम् *rudrakuṭumba sūtram* | Description of the family of Rudra (42 aphorisms) |
| **5.6.** | सृष्टिसूत्रम् *sṛṣṭisūtram* | On Creation (33 aphorisms) |
| **5.7.** | ईश्वरमीमांसा *īśvaramīmāṁsā* | Description of the true nature of Ishwara (65 aphorisms) |
| **5.8.** | क्रियाशक्तिमीमांसा *kriyāśakti-mīmāṁsā* | On the Divine power of action (24 aphorisms) |

| | | |
|---|---|---|
| **5.9.** | सिद्धान्तसारसूत्रम् *siddhāntasāra-sūtram* | The essence of decisive truth principle (42 aphorisms) |
| **5.10.** | मनीषासङ्ग्रहः *manīṣāsaṅgrahaḥ* | A manual of spiritual science (120 aphorisms) |
| **5.11.** | अथ शान्तितपोबोधानां फलनिरूपणम् *atha śāntitapobodhānāṁ phalanirūpaṇam* | Determining the fruits of peace, austerity and knowledge (9 aphorisms) |
| **5.12.** | गायत्रीव्याख्यानम् *gāyatrīvyākhyānam* | Explanation of the Gayatri Mantra of Rishi Vishwamitra (48 aphorisms) |
| **5.13.** | योगव्याख्यानम् *yogavyākhyānam* | On Yoga (48 aphorisms) |
| **5.14.** | सीताव्याख्यानम् *sītāvyākhyānam* | On Sita – the consort of Sri Rama (51 aphorisms) |
| **5.15.** | कृष्णव्याख्यानम् *kṛṣṇavyākhyānam* | On Sri Krishna (75 aphorisms) |
| **5.16.** | तत्त्वसामान्यमीमांसा *tattvasāmānya-mīmāṁsā* | A brief enquiry into the principles of existence (20 aphorisms) |
| **5.17.** | *तत्त्वमीमांसा *tattvamīmāṁsā* | The principles of existence (245 aphorisms) |

| | | |
|---|---|---|
| **5.18.** | प्रमाणपरीक्षा<br>*pramāṇaparīkṣā* | Explaining Pramana, a means to attain Prama or a certain Knowledge (50 aphorisms) |
| **5.19.** | समवायपरीक्षा<br>*samavāyaparīkṣā* | Explaining Samavaya or the perpetual co-inherence that lies between a substance and its qualities (14 aphorisms) |
| **5.20.** | अभावपरीक्षा<br>*abhāvaparīkṣā* | Explaining Abhava or non-existence, one of the six pramanas of the Vedanta philosophy (40 aphorisms) |
| **5.21.** | पञ्चजनचर्चा<br>*pañcajanacarcā* | On untouchability (89 aphorisms) |
| **5.22.** | गोत्रप्रवरनिर्णयः<br>*gotrapravara-nirṇayaḥ* | Determination of the family sub-divisions (200 aphorisms) |
| **5.23.** | विवाहधर्मसूत्रम्<br>*vivāhadharma-sūtram* | On Hindu laws and custom of marriage (151 aphorisms) |
| **5.24.** | शब्दप्रमाणचर्चा<br>*śabdapramāṇacarcā* | An enquiry into the authority of Vedas (166 aphorisms) |
| **5.25.** | जैमिनीयतर्कवार्तिकम्<br>*jaiminīyatarka-vārtikam* | A new interpretation of the aphorisms of Jaimini (348 aphorisms) |

| | | |
|---|---|---|
| **5.26.** | पञ्चममीमांसा *pañcamamīmāṁsā* | On five kinds of people (130 aphorisms) |
| **5.27.** | दर्शनमाला *darśanamālā* | On Metaphysics (121 aphorisms) |
| **5.28.** | गणपतिदर्शनम् *gaṇapatidarśanam* | Spiritual thoughts of Ganapati Muni (95 aphorisms) |
| **5.29.** | *शक्तिदर्शनम् *śaktidarśanam* | On the dynamic aspect of the Divine (109 aphorisms) |
| **5.30.** | साम्राज्यनिबन्धनम् *sāmrājya nibandhanam* | A new constitution for India (560 aphorisms) |

## VOLUME 6

**6.** सूत्रग्रन्थमाला *sūtragranthamālā*
**The Book of Aphorisms (Part Two)**

| | | |
|---|---|---|
| **6.1-16.** | *विश्वमीमांसा *viśvamīmāṁsā* | An encyclopedic work on all aspects of the Hindu religion (1640 aphorisms) |
| **6.17.** | तत्त्वानुशासनसूत्राणि *tattvānuśāsana-sūtrāṇi* | Instructions on the principles of existence (18 aphorisms) |
| **6.18-26** | *धर्मानुशासनम् *dharmānu-śāsanam* | Instructions on Dharma (839 aphorisms) |

| | | |
|---|---|---|
| 6.27-28 | *देवतामीमांसा *devatāmīmāṁsā* | On Vedic deties (162 aphorisms) |
| 6.29. | *वासिष्ठदर्शनम् *vāsiṣṭhadarśanam* | Doctrine of Ganapati Muni (45 aphorisms) |
| 6.30. | *सर्वार्थदर्शनम् *sarvārtha-darśanam* | On the doctrine of direct perception (77 aphorisms) |
| 6.31. | *आदिशास्त्रार्थसूत्रम् *ādiśāstrātha-sūtram* | On the first hymn of the Rigveda (70 aphorisms) |
| 6.32. | *वासिष्ठकामसूत्राणि *vāsiṣṭhakāma sūtrāṇi* | On sexual love as understood by Ganapati Muni (89 aphorisms) |
| 6.33. | *महावार्तिकम् *mahāvārtikam* | On the authenticity of Vedic texts (94 aphorisms) |

## VOLUME 7

### 7. भाष्यग्रन्थमाला *bhāṣyagranthamālā* The Book of Commentaries

| | | |
|---|---|---|
| 7.1. | *मूलग्रन्थप्रशंसा *mūlagrantha-praśaṁsā* | A tribute to Rigveda |

| | | |
|---|---|---|
| **7.2.** | *नूतनभाष्यकरणा-वसरकथनम्<br>*nūtanabhāṣyakaraṇā-vasarakathanam* | Necessity for a fresh and new interpretation of the Rigveda |
| **7.3-5.** | *ऋग्वेदभाष्यम्<br>*ṛgvedabhāṣyam* | Introduction to a commentary on the Rigveda |
| **7.6.** | *आदिवेदमीमांसा<br>*ādivedamīmāṁsā* | On the Rigveda |
| **7.7.** | *ऋग्वेदविमर्शिनी<br>*ṛgvedavimarśinī* | Rigveda – an introduction |
| **7.8.** | ऋग्वेदमन्त्रभाष्यम्<br>*ṛgvedamantra-bhāṣyam* | Explanation of some of the hymns of the 1st, 2nd and 7th mandala of Rigveda |
| **7.9.** | *विश्वमीमांसा-प्रथमम् अक्षरप्रकरणम्<br>*viśvamīmāṁsā-prathamamakṣara-prakaraṇam* | On word-meaning relationship |
| **7.10.** | *देवताकाण्डे द्वितीयं प्रकरणम्<br>*devatākāṇḍe dvitīyaṁ prakaraṇam* | Second chapter on Vedic godheads |

| | | |
|---|---|---|
| **7.11.** | *ऐन्द्रसहस्रनाम-भाष्यम्<br>*aindrasahasra-nāmabhāṣyam* | Commentary on thousand names of Indra |
| **7.12.** | जैमिनीयसूत्रभाष्यम्<br>*jaiminīyasūtra-bhāṣyam* | Commentary on the aphorisms of Jaimini |
| **7.13.** | ईशोपनिषद्भाष्यम्<br>*īśopaniṣadbhāṣyam* | Commentary on Ishopanishad |
| **7.14.** | उपदेशसारभाष्यम्<br>*upadeśasārabhāṣyam* | Commentary on Upadeshasara of Sri Ramana Maharshi |
| **7.15.** | गुरुमन्त्रभाष्यम्<br>*gurumantrabhāṣyam* | Commentary on Gurumantra |
| **7.16.** | अग्नेः चतस्रो विभूतयः<br>*agneḥ catasro vibhūtayaḥ* | Four emanations of Agni |
| **7.17.** | दैवरातदर्शनम् अन्वयभाष्यम्<br>*daivarāta-darśanam anvayabhāṣyam* | A commentary on the doctrine of Daivarata, a disciple of Sri Ganapati Muni |
| **7.18.** | *मातृतत्त्वप्रकाशिका<br>*mātṛtattva-prakāśikā* | A Sanskrit rendering of two chapters of Sri Aurobindo's *The Mother* |

| | | |
|---|---|---|
| **7.19.** | *शारीरकमीमांसा टिप्पणी *śārīrakamīmāṁsā-ṭippaṇī* | A note on the *Brahmasutra-bhashya* of Adi Sankara |
| **7.20.** | *वैदिकशब्दानामर्थाः *vaidikaśabdānām arthāḥ* | Meanings of Vedic words |

VOLUME 8

**8.** आयुर्वेदज्योतिषग्रन्थमाला
*āyurvedajyotiṣagranthamālā*
**The Book of Ayurveda and Astrology**

| | | |
|---|---|---|
| **8.1.** | चिकित्सानुशासनम् *cikitsānuśāsanam* | Instructions on medical treatment (384 aphorisms) |
| **8.2.** | प्राणतोषणम् *prāṇatoṣaṇam* | A treatise on the maintenance of a healthy life (108 verses) |
| **8.3.** | होरानिर्णयसङ्ग्रहः *horānirṇaya-saṅgrahaḥ* | A treatise on Astrology (81 verses) |
| **8.4.** | षोडशश्लोकी *ṣoḍaśaślokī* | Merits and demerits of the planetary positions (16 verses) |
| **8.5.** | त्रिभावफलचन्द्रिका *tribhāvaphala-candrikā* | A work on Keraliya Astrology dealing with Ayu – life-span, Kalatra – wife, Putra – son (89 verses) |

**8.6.** गणककण्ठाभरणम् *gaṇakakaṇṭhā-bharaṇam* — On movements of the planets

VOLUME 9

**9.** *भारतचरित्रमीमांसा *bhāratacaritramīmāṁsā*
**A Treatise on the Mahabharata**

VOLUME 10

**10.** *पूर्णा *pūrṇā*
**Purna – A Novel**

VOLUME 11

**11.** प्रकीर्णकम् *prakīrṇakam*
**Miscellaneous Writings**

**11.1.** गणपतिमुनेः पत्राणि *gaṇapatimuneḥ patrāṇi* — Letters of Ganapati Muni

**11.2.** नवद्वीप-काव्यकण्ठः *navadvīpa-kāvya-kaṇṭhaḥ* — Ganapati Muni recieving 'Kavyakantha' title

**11.3.** प्रास्ताविकपद्यानि *prāstāvikapadyāni* — Collection of stray verses

| | | |
|---|---|---|
| **11.4.** | सुकन्यादस्रसंवादः *sukanyādasra-saṁvādaḥ* | Dialogue between Sukanya and Ashwinideva from Mahabharata |
| **11.5.** | पाण्डवधार्तराष्ट्रसम्भवः *pāṇḍavadhārta-rāṣṭrasaṁbhavaḥ* | Extempore verses on the origin of the Pandavas and Kauravas |
| **11.6.** | *भृगुवंश इतिहासः *bhṛguvaṁśa itihāsaḥ* | History of Bhrigu lineage |
| **11.7.** | लालिभाषोपदेशः *lalibhāṣopadeśaḥ* | A proposed new language |
| **11.8.** | इतरग्रन्थाः *itaragranthāḥ* | Other texts |

VOLUME 12

**12.** अनुक्रमणी *anukramaṇī*
**Index**

"Vasishtha Ganapati Muni (1878-1936) was a luminary of the first magnitude on the spiritual firmament of modern India. He was a versatile genius whose contribution in the many fields to which he turned his attention are yet to be fully assessed." **Sri M.P. Pandit**, ***Adoration of the Divine Mother***.

"Kavyakantha Ganapati Sastri, .... played much the same role in the life and reputation of Bhagavan Sri Ramana Maharshi as Swami Vivekananda did in that of Sri Ramakrishna Paramahamsa. Sri Vasishtha Muni was a mighty spiritual personality in his own right, .... he recognized the uniqueness of Bhagavan's teaching, accepted him as his *guru* and proclaimed him as the Maharshi to the whole world. Those who want to understand the message of the Maharshi in its pristine purity have to study the Muni's redaction of the Master's teachings ..." **Sri S. Shankaranarayanan**, ***Bhavan's Journal***.

॥ वासिष्ठकाव्यकण्ठगणपतिमुनेः ग्रन्थमाला ॥

Collected Works of Vasishtha Kavyakantha Ganapati Muni

VOLUME 1 स्तोत्रग्रन्थमाला *stotragranthamālā*
The Book of Adoration (Part One)

VOLUME 2 स्तोत्रग्रन्थमाला *stotragranthamālā*
The Book of Adoration (Part Two)

VOLUME 3 स्तोत्रग्रन्थमाला *stotragranthamālā*
The Book of Adoration (Part Three)

VOLUME 4 तत्त्वग्रन्थमाला *tattvagranthamālā*
The Book on the Principles of Existence

VOLUME 5 सूत्रग्रन्थमाला *sūtragranthamālā*
The Book of Aphorisms (Part One)

**VOLUME 6 सूत्रग्रन्थमाला *sūtragranthamālā***
**The Book of Aphorisms (Part Two)**

VOLUME 7 भाष्यग्रन्थमाला *bhāṣyagranthamālā*
The Book of Commentaries

VOLUME 8 आयुर्वेदज्योतिषग्रन्थमाला *āyurvedajyotiṣagranthamālā*
The Book of Ayurveda and Astrology

VOLUME 9 भारतचरित्रमीमांसा *bhāratacaritramīmāṁsā*
A Treatise on the Mahabharata

VOLUME 10 पूर्णा *pūrṇā*
Purna - A Novel

VOLUME 11 प्रकीर्णकम् *prakīrṇakam*
Miscellaneous Writings

VOLUME 12 अनुक्रमणी *anukramaṇī*
Index